॥ श्रीजिनाय नमः ॥

# ॥ श्रीपंचसूत्रटीका ॥

( कर्ता—श्रीहरिभद्रसूरि )

छपावी प्रसिद्ध करनार

पंडित श्रावक हीरालाल हंसराज ( जामनगरवाळा )

वीरसंवत्—२४३८ विक्रमसंवत्—१९६९ सने १९१२

कि रु–१–८–०

॥ श्रीजिनाय नम ॥

## ॥ अथ श्रीपचसूत्रटीका प्रारभ्यते ॥

( कर्ता श्रीहरिभद्रसूरि )

छपावी प्रसिद्ध करनार—पडित श्रावक हीरालाल हसराज ( जामनगरवाळा )

प्रणम्य परमात्मान । महावीर जिनेश्वर ॥ सत्पचसूत्रकव्याख्या । समासेन विधीयते ॥ १ ॥ आह—किमिद पचकसूत्रक नाम? उच्यते—पापप्रतिघातगुणबीजाधानसूत्रादीनि पचसूत्राण्येव, तद्यथा—पापप्रतिघातगुणबीजाधानसूत्र १• साधुधर्मपरिभावनासूत्र २• प्रव्रज्याग्रहणविधिसूत्र ३• प्रव्रज्यापरिपालनासूत्र ४• प्रव्रज्याफलसूत्र ५ मिति आह—किमर्थमेवमेतेषामुपन्यास इत्यत्रोच्यते—एतदर्थस्यैवमेव तत्वतोभाव इति ख्यापनार्थ, न हि प्राय पापप्रतिघातेन गुणबीजाधान विना त त्वतस्तत् श्रद्धाभावप्ररोह, न वासत्यस्मिन् साधुधर्मपरिभावना, न वापरिभावितसाधुधर्मस्य प्रव्रज्या ग्रहणविधावधिकार, न चाप्रतिपन्नस्ता तत्पालनाय यतते, न चापालने एतत्फलमाप्नोतीति प्रवचन

सार एषः सदूज्ञानक्रियायोगात्. अन्यथा अनादिमति संसारे यथाकथंचिदनेकशः एतत्प्राप्त्यादेः
स्यादेतत्सर्वसत्वानामेव, न चैतदेवं सर्वसत्वानां सिद्ध्यभावात्. सिद्धिश्च प्रधानं फलं प्रव्रज्यापरिपा-
लनस्य, आनुषंगिकं तु सुदेवत्वादि यथाकथंचिदनेकश एतत्प्राप्त्यादि च वचनप्रामाण्यात्, सर्वस-
त्वानामेव प्रायो ग्रैवेयकेष्वनंतश उपपातश्रुतेः. न च तेषु साधुक्रियामंतरेणोपपातः, न च सम्य-
ग्दृष्टेरपार्धपुद्गलावर्ताभ्यधिको भव इति भावनीयमेतत्, तस्मान्निर्बीजस्यैव क्रियामात्रस्य सा प्राप्ति-
रिति प्रतिपत्तव्यं, सबीजायां तु तस्यां न दीर्घदौर्गत्यं. अत एव तदर्थस्यैवमेव तत्वतो भाव इति
स्थितं, यं चातिगंभीरो न भवाभिनंदिभिः क्षौद्राद्युपघातात् तत्प्रतिपत्तुमपि शक्यते, आस्तां पुनः
कर्तुमिति, न सर्वेषामेवैतत्प्राप्तिः स्याद्यतो यथोक्तदोषाभाव इत्यलं विस्तरेण. इह चेदमादिसूत्रं–
'णमो वीतरागाणमित्यादि' नमो वीतरागेभ्यः, तत्र रज्यतेऽनेनेति रागः, रागवेदनीयं कर्म, आ-
त्मनः कचिदभिष्वंगपरिणामापादनात् रंजनं वा रागः, रागवेदनीयकर्मापादितो भावोऽभिष्वंगपरि-
णाम एव. वीतोऽपेतो रागो येषां ते वीतरागास्तेभ्यो नमः, एतच्च वीतद्वेषमोहोपलक्षणं, वीतद्वेषे-
भ्यो वीतमोहेभ्यः, तत्र द्विष्यतेऽनेनेति द्वेषः, द्वेषवेदनीयं कर्म, आत्मनः कचिदज्ञानपरिणामापा-

दनात् द्वेषण द्वेष, द्वेषकर्मापादितो भावोऽप्रीतिपरिणाम एव, एव मुह्यतेऽनेनेति मोह, मोहवेद-
नीय कर्म, आत्मन क्वचिदज्ञानपरिणामापादनात्, मोहन वा मोह, मोहवेदनीयकर्मापादितो भा
वोऽज्ञानपरिणाम एव, एतदुपलक्षण वीतरागग्रहण, तथा चाह—' सवनूण ' सर्वज्ञेभ्य, नह्यवीत-
रागा एव अवीतद्वेषादय सर्वज्ञा भवति, सर्व जानतीति सर्वज्ञास्तेभ्यो नम, ये वीतरागास्ते सर्व-
ज्ञा एवेति गतार्थं विशेषण, न छद्मस्थवीतरागाणामसर्वज्ञत्वात्, यद्येव ' सर्वज्ञेभ्य ' इत्येतावदे-
वास्तु अल वीतरागग्रहणेन, न, अवीतरागाणामपि सकलशास्त्रविदामुपचारेण सर्वज्ञव्यवहारसिद्धे,
तद्व्यवच्छेदार्थं वीतरागग्रहणमिति एतद्विशेषणायैव, ' देविदपूजिताण ' देवेन्द्रपूजितेभ्य, देवेन्द्रा
शक्रादयस्तै पूजिता समभ्यार्चितास्तेभ्यो नम, आह—ये वीतरागा सर्वज्ञाश्च ते देवेन्द्रपूजिता
एवेति, नोऽर्थोऽनेन विशेषणेन, न न मुक्तकेवलिप्रभृतीनां केषांचित्तत्पूजितत्वानुपपत्ते, यद्येव दे
वेन्द्रपूजितेभ्य इत्येतदेवास्तु, अल वीतरागादिग्रहणेन, नावीतरागादीनामपि गणधरादीना देवेन्द्र
पूजितत्वसिद्धे, तद्व्यवच्छेदार्थं वीतरागादिग्रहणमिति एतद्विशेषणायैवाह—' जहट्ठितवत्थुवादीण '
यथास्थितवस्तुवादिभ्य, यथास्थितमभिलाप्यानभिलाप्यत्वादिना प्रकारेण स्थित वस्तु वादनशीला

यथास्थितवस्तुवादिनस्तेभ्यो नमः. आह—ये वीतरागाः सर्वज्ञा देवेंद्रपूजिताश्च ते यथास्थितवस्तुवादिन एवेति, न किंचिदनेन विशेषणेनासदभ्युपगमो व्यवच्छेदार्थत्वात्, तथाह्यस्त्येवंविधोऽसदभ्युपगमः, किल वीतरागादयोऽपि न यथास्थितवस्तुवादिनः, वस्तु वाचामगोचर इति वचनात्, यद्येवं यथास्थितवस्तुवादिभ्य इत्येतावदेव चारु, नार्थो वीतरागादिग्रहणेन, न, साम्प्रतः पूर्वधरादेरपि यथास्थितवस्तुवादित्वात्तद्व्यवच्छेदार्थं वीतरागादिग्रहणमिति. व्यवच्छेदश्चेह सर्वत्र गुणप्रकर्षत एवेति, तस्य तत्संपादने तदंतर्गुणानां तत्संपादनमेवेति न्यायख्यापनार्थमिति तु निराकरणार्थमेव. एभिश्चतुर्भिर्विशेषणपदैरपायापगमातिशयादयश्चत्वारो मूलातिशया उक्ता वेदितव्यास्तद्यथा—अपायापगमातिशयो ज्ञानातिशयः पूजातिशयो वागतिशयश्च यथोद्देशमेव वेदितव्याः, तद्यथा—अनेनैव क्रमेणैतेषां भावाः, तथाहि—वीतरागो भूत्वा सर्वज्ञो भवति, सर्वज्ञस्य च पूजातिशयसंभवस्तदनु धर्मदेशनेति, अनेनैव क्रमेणैतेषां भाव इति. एतदविनाभाविनश्चान्येऽपि देहसौगंध्यादयः प्रभूता वेदितव्याः, ततश्च चतुस्त्रिंशदतिशयसमन्वितेभ्यः परमात्मभ्यो नम इत्युक्तं भवति. अत एव सकलविशेषणार्थोपसंहारेणाह—' तेलोयगुरूणं अरुहंताणं भगवंताणंति ' त्रैलोक्यगुरुभ्यः, त्रैलोक्य-

वासिसत्वेभ्यो गृणाति शास्त्रार्थमिति त्रैलोक्यगुरवस्तद्गुणाधिकत्वात्तन्माननीयत्वाद्वा तेभ्यो नम , ए-
तेनैव सनिरधनेनान्वर्थनाम्नाह—अरुहेभ्यो भगवद्भ्य इति, न रोहति न भवाकुरोदयमासादयति
कर्मबीजाभावादित्यरुहास्तेभ्य , किं विशिष्टेभ्य ? भग समग्रैश्वर्यादिलक्षण स विद्यते येषा ते भ
गवतस्तेभ्यो भगवद्भ्यो नम इति एवभूताश्च ते समधिकृतातिशयभाजश्चरमदेहस्था अपि, ततो मु
क्तिभावे जन्माकुरोदयाभावात्, अत एवाह एतदुक्तार्थसूत्रानुवादकृत् ' जे एवमाइक्खतीति ' एव
चानतरेण ग्रथेनेष्टदेवतानमस्कार , अनुवादकरणस्यापि श्रेयोभूतत्वेन तदारभे विघ्नविनायकोपशां
तये मगलार्थ उक्तो वेदितव्य , ये वीतरागादिविशेषणविशिष्टा भगवत एवमिति वक्ष्यमाणमाच
क्षते, अत्यर्थं व्यक्तमभिदधति, कथमित्याह—' इह खलु अणादिजीवे ' इह खल्वनादिजीव ,
इह लोके खलुशब्दोऽवधारणार्थ , लोके एव, नालोके, अनादि सतत सनवस्थितो जीव आत्मा,
सर्वथा असत सत्ताऽयोगात् अतिप्रसगात् विशिष्टशक्त्यसिद्धे , तथा ' अणादिजीवस्स भवे ' अ
नादिजीवस्य भव , भवन्त्यस्मिन् कर्मवशवर्तिन प्राणिन इति भव ससार किंभूतोऽयमित्याह—
' अणादिकम्मसजोगणिव्वत्तिए ' अनादिकर्मसयोगनिर्वर्तित , अनादिश्चासौ कर्मसयोगश्च तत्कृत

इत्याह, नान्यथा, कर्मसंयोगमुक्तस्यैव केवलस्य तदयोगात् अहेतुकत्वापत्तेः, कृतकत्वेऽपि प्रवाहतस्तथाविधकालवदनादित्वाविरोधात्, अयमेव विशिष्यते—' दुक्खरूवे दुक्खफले दुक्खाणुबंधे ' दुःखरूपो दुःखफलो दुःखानुबंधः, तत्तद्दुःखरूपो जन्मजरामरणरोगशोकरूपत्वात्, एतेषां च दुःखत्वात्. तथा दुःखफलो गत्यंतरेऽपि जन्मादिभावात्, तथा दुःखानुबंधोऽनेकभववेदनीयकर्माविहत्वात्. कस्तर्ह्यस्य प्रतीकार इत्याह—' एतस्स णं वोच्छित्ति सुद्धधम्माउ ' एतस्य भवस्य णमिति वाक्यालंकारे व्यवच्छित्तिरुच्छित्तिः शुद्धधर्मात् ज्ञानदर्शनचारित्ररूपात् औचित्येन सातत्यसत्कारविधिसेवितात्, अयं च श्रावकादेरप्यभिग्रहफलनेन ज्ञेयः, अभिग्रहभावस्य सातत्येन भावादिति शुद्धधर्मसंप्राप्तिः, कुत इत्याह—' सुद्धधम्मसंपत्ती पावकम्मविगमाउ ' शुद्धधर्मो यथोदितस्तस्य सम्यक्प्राप्तिः संप्राप्तिर्भावप्राप्तिरित्यर्थः. पापं कर्म मिथ्यात्वमोहनीयादि तस्य विगमो विशिष्टो गमः अपुनर्बंधकत्वेन पृथग्भाव इति यावत्, तस्मात्पापकर्मविगमात्, अयं पुनः कुत इत्याह—' पावकम्मविगमो तहाभवत्तादिभावउ ' पापकर्मविगमो यथोदिततथाभव्यत्वादिभावात्, भव्यत्वं नाम सिद्धिगमनयोग्यत्वमनादिपारिणामिको भावः, तथा भव्यत्वमिति विशिष्टमेतत् कालादिभेदेनात्मनां बी-

जसिद्धिभावात्, आदिशब्दात्काळनियतिकर्मपुरुषकारणपरिग्रह, साध्यव्याधिकल्पत्वात्तथा भव्यत्व स्य विपाकसाधनान्याह—' तस्स पुण विवागसाहणाणि ' तस्य पुनस्तथाभव्यत्वस्य विपाकसाधनानि अनुभावकारणानि, कानि तानीत्याह—' चउसरणगमण ' चतुर्णामर्हत्सिद्धसाधुकेवलिप्रज्ञप्तधर्माणा शरणगमन प्रधानशरणोपगम इत्यर्थ महानय प्रत्यपायपरिरक्षणोपाय, तथा ' दुक्कडगरहा ' दुष्कृतेष्विहपरभवगतेपु गर्हा अकर्तव्यबुद्धिसारा परसाक्षिकी तथानिवेदनाप्रतिपत्तिदुष्कृतगर्हा अप्रतिहतेय कर्मानुबधापनयने इति कर्तव्या, तथा ' सुकडासेवण ' सुकृतस्य सति विवेके नियतभाविनोऽवन्ध्यभावसिद्धे परकृतानुमोदनरूपस्यासेवन कुशलाशयनिबधनमिति परिभावनीय, कृतकारितानुमतिभेदभिन्ने हि पुण्यपापे, एभिस्तत्तथास्वाभाव्यात्साध्यव्याधिवत्तथाभव्यत्व परिपाच्यत इति, यत एवमत ' कायव्वमिण होउ कामेण ' यस्मादुक्तवदधिकृततत्वसिद्धिरतोऽस्मात्कारणात्कर्तव्यमिद वक्ष्यमाण भवितुकामेन मोक्षार्थिना भव्यसत्वेन, कथ कर्तव्यमित्याह—' सया सुप्पणिहाण ' सदा सर्वकाल सुप्रणिधान शोभनेन प्रणिधानेन, नात्र कालो नियम्यते, किंतु सुप्रणिधानमिति यदा यदा क्रियते तदा तदा सुप्रणिधान कर्तव्यमित्यर्थ, सुप्रणिधानस्य फलसिद्धौ

प्रधानांगत्वात्, उक्तं च—प्रणिधानकृतं कर्म । मतं तीव्रविपाकवत् ॥ सानुबंधननियमात् । शुभां-
शाच्चैतदेव तत ॥ १ ॥ इष्टं चैतदंगीकर्तव्यमित्याह—' भुज्जो भुज्जो संकिलेसे ' कर्तव्यमिदं भू-
योभूयः पुनः पुनः संक्लेशे सति तीव्ररागादिसंवेदनरूपे अरतावुत्पन्नायामिति यावत्. तथा ' ति-
कालसंकिलेसे ' त्रिकालं त्रिसंध्यं कर्तव्यमिदं असंक्लेशे प्रकृत्या कालगमने सति, यत्कर्तव्यं तदा-
ह—' जावज्जीवं मे भगवंतो अरहंता सरणं ' इति योगः, जावज्जीवं यावज्जीवितं मे मम भगवं-
तः समग्रैश्वर्यादियुक्ता अर्हंतः शरणमिति योगः, अत्र यावज्जीवमिति कालपरिमाणं, परतो भंग-
भयात, पुनरवधित्वेन परतोऽप्यधिकृतशरणस्येष्टत्वात्, अत एव विशेष्यंते ' अणुत्तरपुण्णसंभारा '
अनुत्तरः सर्वोत्तमहेतूत्कर्षात्पुण्यसंभारस्तीर्थंकरनामकर्मलक्षणो येषां ते, तथा त एव विशेष्यंते—
' अचिंतचिंतामणी ' अचिंत्यचिंतामणयः, चिंतातिक्रांतापवर्गविधायकत्वेन, त एव विशेष्यंते—
' भवजलहिपोआ ' भवजलधिपोतास्तदुत्तारकत्वेन, त एव विशेष्यंते—' एगंतसरणा ' एकां-
तशरण्याः सर्वाश्रितहितत्वेन, क एवंभूताः? किं वा एत इत्याह—' अरहंता सरणं ' अर्हंतः श-
रणं, तत्राशोकाद्यष्टमहाप्रातिहार्यलक्षणपूजामर्हंतीत्यर्हंतः, ते मम शरणमाश्रय इति. ' तहा पही-

णजरामरणा सिद्धासरण ' इति योग , तथा न केवलमर्हत किंतु सिद्धा शरणमिति, किंविशि ष्टास्त इत्याह—प्रक्षीणजरामरणा प्रक्षीणे सदाऽपुनर्भावित्वेन जरामरणे येपा ते तथा, जन्मादि बीजाभावात एत एव विशेष्यते—' अवेयकम्मकलका ' अपेतकर्मकलका , अपेत कर्मकलको येषां ते तथाविधा , सर्वथा कर्मरहिता इत्यर्थ एत एव विशेष्यते—' पणठवाबाहा ' प्रणष्टव्याबा धा प्रकर्षेण नष्टा क्षीणा व्याबाधा येपा ते तथा, सर्वव्याबाधावर्जिता इति भाव एत एव विशे-ष्यते—' केवलणाणदसणा ' केवलज्ञानदर्शना केवले सपूर्णे ज्ञानदर्शने येपा ते तथाविधा सर्वज्ञा सर्वदर्शिन इत्यर्थ , एत एव विशेष्यते—' सिद्धिपुरवासिन ' सिद्धिपुरे लोकांते वस्तु शील येपा ते तथा मुक्तिवासिन इति गर्भ , एत एव विशेष्यते—' णिरुवमसुहसगया ' निरुप मसुखसगता निरुपमसुखेनाविद्यमानापेक्षेण सगता इति समास , असांयोगिकानदयुक्ता इत्यर्थ , एत एव विशेष्यते—' सवहा कयकिच्चा ' सर्वथा कृतकृत्या , सर्वथा सर्वै प्रकारै कृत कृत्य यैस्ते तथा निष्ठितार्था इति भाव क एवभूता ? किं वा एत इत्याह—' सिद्धा सरण ' सिध्यतिस्मेति सिद्धा परमतत्वरूपास्ते मम शरणमाश्रय इति ' तहा पसतगभीरासया साधुसरण ' इति योग ,

तथा न केवलं सिद्धाः शरणं, किंतु साधवः शरणमिति क्रिया, किंविशिष्टास्त इत्याह—प्रशांतः क्षांतियोगात्, गंभीरोऽगाधतया आशयश्चित्तपरिणामो येषां ते प्रशांतगंभीराशयाः, एत एव विशेष्यंते—'सावज्जजोगविरया' सहावद्येन सावद्यः सपापो योगो व्यापारः कृतादिरूपस्तस्माद्विरताः, तथा 'पंचविहायारजाणगा' पंचविधमाचारं ज्ञानाचारादिभेदभिन्नं जानंत इति पंचविधाचारजानकाः, एत एव विशेष्यंते—'परोवयारणिरया' परोपकारे एकांतिकात्यंतिकरूपे निरताः परोपकरणे रताः, एत एवविशेष्यंते—'पउमाइणिदंसणा' पद्मादीनि पंकोत्पत्तिजलस्थितिभावेऽपि तदस्पर्शनेन कामभोगापेक्षयैवमेव भाव इति निदर्शनानि येषां ते पद्मादिनिदर्शनाः, आदिशब्दादंबरसलिलादिग्रहः, एत एव विशेष्यंते—'झाणज्झयणसंगया' ध्यानाध्ययनाभ्यां एकाग्रचिंतानिरोधस्वाध्यायलक्षणाभ्यां संगता ध्यानाध्ययनसंगताः, एत एव विशेष्यंते—'विसुद्धमाणभावा' विशुध्यमानो विहितानुष्ठानेन भावो येषां ते विशुध्यमानभावाः, क एवंभूताः? किं वा एत इत्याह—'साहूसरणं' तत्र सम्यग्दर्शनादिभिः सिद्धिं साधयंतीति साधवो मुनय इत्यर्थः, ते मम शरणमाश्रय इति. 'तहा सुरासुरमणुअपूजिओ केवलिपण्णत्तो धम्मो जावजीव मे भगवं सरणं' इ-

ति योग, तथा न केवल साधव शरण. कि तु केवलिप्रज्ञप्तो धर्म इति सबन्ध किंविशिष्ट इत्या
ह—सुरासुरमनुजै पूजित सुरासुरमनुजपूजित, सुरा ज्योतिष्कवैमानिका, असुरा व्यतरभवनप
तय, मनुजा पुरुषविद्याधरा अयमेव विशेष्यते—' मोहतिमिरंसुमाली ' मोहस्तिमिरमिव मोह-
तिमिर सद्दर्शनवारकत्वेन, तस्यांशुमालीवांशुमाली, तदपनयनादादित्यकल्प, अयमेव विशेष्यते—
' रागदोसपरममतो ' रागद्वेषौ विषमिव रागद्वेषविष तस्य परममन्त्र, तद्धातित्वेनेति भाव, अयमेव
विशेष्यते—' हेऊसयलकल्लाणाण ' हेतु कारण प्रवर्तकत्वादिना सकलकल्याणाना सुदेवत्वा
दीना, अयमेव विशेष्यते—' कम्मवणविभावसु ' कर्मवनस्य ज्ञानावरणीयादिसमुदयरूपस्य वि
भावसुरिवाग्निरिव तद्दाहकत्वेन, अयमेव विशेष्यते—' साधको सिद्धभावस्स ' साधको निर्वर्तक
सिद्धभावस्य सिद्धत्वस्य, तथातथा तत्सपादकत्वेन, कोऽयमेव किवेत्याह—' केवलिपणतो धम्मो '
केवलिप्रज्ञप्त केवलिप्ररूपितो धर्म श्रुतादिरूप ' जावजीव मे भगव ' यावज्जीवमिति पूर्ववत्, मे
मम भगवान् समग्रैश्वर्यादिगुणयुक्त शरणमाश्रय, एतच्चतु शरणगमन एकार्थसाधकत्वेन प्रवृत्ता
नामप्यनिरुद्धमेव, एष एव परमार्थ, ' चत्तारि सरण पवज्जामि, अरहते सरण पवज्जामि, सिद्धे

सरणं पवज्जामि, साहू सरणं पवज्जामि, केवलिपण्णत्तं धम्मं सरणं पवज्जामित्ति ' चतुःशरणगमना· नंतरं दुःकृतगर्होक्ता, तामाह—' सरणमुवगओ य एतेसिं ' इत्यादिना शरणमुपगतश्च सन्नेष ते· षामर्हदादीनां गर्हेदु दुःकृतं, किंविशिष्टमित्याह—' जइणं अरहंतेसु वा ' इत्यादि, यदिति दुष्कृ· तनिर्देशः, णमिति वाक्यालंकारे, अर्हत्सु वा अर्हद्विषयं वा, एवं सिद्धेषु वा आचार्येषु वा उपा· ध्यायेषु वा साधुषु वा साध्वीषु वा अन्येषु वा धर्मस्थानेषु वा सामान्येन गुणाधिकेषु माननीयेषु पूजनीयेषु तथा मातृषु वा पितृषु वा, अनेकजन्मापेक्षं बहुवचनं, बंधुषु वा मित्रेषु वा उपकारिषु वा उघेन वा जीवेषु मार्गस्थितेषु सम्यग्दर्शनादियुक्तेषु अमार्गस्थितेषु एतद्विपरीतेषु मार्गसाधने· षु पुस्तकादिषु अमार्गसाधनेषु खड्गादिषु यत्किंचिद्वितथ्यमाचरितं अविधिपरिभोगादिना अनाच· रितव्यक्रियया अनेष्टव्यं मनसा पापं पापकारणत्वेन पापानुबंधितया विपाकभावेन सूक्ष्मं वा बादरं वा स्वरूपतः, कथमेतदाचरितमित्याह—मनसा वाचा कायेन वा कृतं चात्मना, कारितं चान्यैः, अ· नुमोदितं वा परकृतं, एतदपि रागेण वा द्वेषेण वा मोहेन वा, अत्र जन्मनि जन्मांतरेषु वा अ· तीतेषु गर्हितमेतत् कुत्सास्पदं दुःकृतमेतत्सद्धर्मबाह्यत्वेन उज्झितव्यमेतद्धेयतया विज्ञातं मया क·

व्याणमित्र गुरुजनवद्वचनात्, भगवद्वचनप्राप्तौ प्राय इयमानुपूर्वी, इत्येवमुपन्याम, एवमेतदिति रोचित श्रद्धया तथाविधकर्मक्षयोपशमजया, तत त्रिमित्याह—अर्हत्सिद्धसमक्ष तानधिकृत्य गर्हे अहमिद कृत्मामीत्यर्थं, कथमित्याह—दु कृतमेतत् उचितव्यमेतत्, अत्र व्यतिकरे मिच्छामि दुक्कड पारत्रय पाठ न्याख्याम्यार्थनिरोपत्वात्माहृतादौरेव न्याय्या, निर्युक्तिकारवचनप्रामाण्यात्, आह च निर्युक्तिकार—मितिमिउ मद्दवत्तवत्तियदोसाणछायणे होइ मित्तियमेराए ठिओ दुत्ति दुगछामि अप्पाण कत्तिकम्मे पावमतियडेवेमि त उवसमेण एसो मिच्छाडुक्कडपयक्खरत्थो समासेण, अत्रैतत्सुदरत्वान्नासम्यगभिमन्यमान आह—' होउ मे एसा सम्म गरिहा ' इत्यादि, भवतु ममैपा नतरोदिता सम्यग्गर्हा भावरूपा भवतु मे अकरण नियम ,' अर्थिनेदवत्तद्वधरूपो गर्हाविषय इति सामर्थ्यं बहुमत ममैतद् द्वय, इत्यस्मादिछाप्यनुशास्ति उदितमपचरीजभूता, केपामित्याह—अर्हता भगवता तथा गुरुणा कल्याणमित्राणामिति, प्रतिपन्नतत्वाना गुणाधिकविपर्यैव प्रवृत्तिर्न्याय्येत्येवमुपन्याम, प्रणिध्यतरमाह—' होउ मे एएहि सजोगो ' भवतु मम एभिरर्हदादिभि सयोग उचितो योग इत्यर्थ, भवतु ममैपा सुप्रार्थना अर्हदादिसयोगविपया, भवतु ममात्र बहुमान प्रार्थना

यां, भवतु मम इतः प्रार्थनातो मोक्षबीजं सुवर्णघटसंस्थानीयं प्रवाहतः कुशलानुबंधिकमित्यर्थः, तथा ' पत्तेसु एएसु अहं सेवारहेसिया ' प्राप्तेष्वेतेषु अर्हदादिष्वहं सेवार्हः स्यां, अर्हदादीनामेवाज्ञाग्राही स्यामेतेषामेव प्रतिपत्तियुक्तः स्यामेवं निरतिचारं पारगः स्यां एतदाज्ञया, एवं सानुषंगां दुःकृतगर्हामभिधाय सुकृतासेवनमाह—' संविग्गे जहा सत्तीए सेवेमि सुकडंति ' इत्यादिना संविग्नः सन यथाशक्ति, किमित्याह—सेवे सुकृतं, एतदेवाह—अनुमोदे अहमिति प्रक्रमः सर्वेषामर्हतामनुष्ठानं धर्मकथादि, एवं सर्वेषां सिद्धानां सिद्धभावं अव्याबाधादिरूपं, एवं सर्वेषामाचार्याणामाचारं ज्ञानाचारादिलक्षणं, एवं सर्वेषां श्रावकाणां मोक्षसाधनयोगान् वैयावृत्त्यादीन्, एवं सर्वेषां देवानामिंद्रादीनां, सर्वेषां जीवानां सामान्येनैव भवितुकामानामासन्नभव्यानां कल्याणाशयानां शुद्धाशयानामेतेषां किमित्याह—मार्गसाधनयोगान् सामान्येन कुशलव्यापारानतुमोद इति क्रियानुवृत्तिः, भवंति चैतेषामपि मार्गसाधनयोगा मिथ्यादृष्टीनामपि गुणस्थानकत्वाभ्युपगमात्. अनभिग्रहे सति प्रणिधिविशुद्धिमाह—भवतु ममैषानुमोदना अनंतरोक्ता सम्यग्विधिपूर्विका सूत्रानुसारेण सम्यक् शुद्धाशया कर्मविगमेन सम्यक्प्रतिपत्तिरूपा क्रियारूपेण सम्यग्निरतिचारा सन्निर्वहणेन कुतो

भवत्वित्याह—परमगुणयुक्तार्हदादिसामर्थ्येन, आदिशब्दात सिद्धादिपरिग्रह, प्रार्थनाया सविषय
तामाह—अचिन्त्यशक्तियुक्ता हि ते भगवतोऽर्हदादयो वीतरागा सर्वज्ञा प्राय आचार्यादीनामप्ये
तद्वीतरागादित्वमस्तीत्येवमभिधान, तद्विषयापेक्षं त्वाह—परमकल्याणा आचार्यादयोऽपि परमक
ल्याणहेतवे सत्वानां तैस्तैरुपायै सर्व एवैते मूढश्चास्मि पाप, एतेषां विशिष्टानां प्रतिपत्तिप्रति अ
नादिमोहवासित ससारानादित्वेन अनभिज्ञो भवेत्, परमार्थतो हिताहितयोरभिज्ञ स्यामहमेत
त्सामर्थ्येन तथाऽहितनिवृत्त स्या, तथा हितप्रवृत्त स्यां, एवमाराधक स्या उचितप्रतिपत्त्या सर्वस-
त्वाना सर्वधिन्या, किमित्याह—स्वहितमिति, इच्छामि सुकृत २ एव वारत्रय पाठ, उत्तममेतत्सुकृ-
तासेवन विशेषत पृथग्भूताना वनठेतृबलदेवमृगोदाहरणात् परिभावनीय सूत्रपाठे फलमाह—
'एवमेय सम्म पढमाणस्स' एवमेतत्सूत्र सम्यक्पठत सवेगसार तथा 'सुणमाणस्स' शृण्वत
आकर्णयतोऽन्यसमीपात्, तथा 'अणुप्पेहमाणस्स' अनुप्रेक्षमाणस्यार्थानुस्मरणद्वारेण, किमित्या
ह—'सिढिलीभवति' शिथिलीभवति मदविपाकतया, तथा परिहीयते पुद्गलापसरणेन, तथा-
'खियति' क्षीयते निर्मूलत एवाशयविशेषाभ्यासद्वारेण, क इत्याह—'असुहकम्माणुबधा' अ

शुभकर्मानुबंधा भावरूपाः कर्मविशेषरूपा वा, ततः किमित्याह ' निरनुबंधे वा सुहकम्मे ' निरनुबं-
धं चाशुभं कर्म क्षयोपेक्षमास्ते ' भग्गसामत्थे सुहपरिणामेण ' भग्नसामर्थ्यं विपाकप्रवाहमंगीकृत्य
शुभपरिणामेन अनंतरोदितसूत्रप्रभवेन, किमिवेत्याह—' कयबद्धेवि य विसे अप्पफलेसिया '
पाटकबद्धमिव विषं मंत्रसामर्थ्येन अल्पफलं स्यात् अल्पविपाकमित्यर्थः, तथा ' सुहावणिज्जे सिया '
सुखापनेयं स्यात्, फलत्वेनोक्तं, इदानीं सदुपायसिद्धिलक्षणमेतदभिधातुमाह—' तहा आसग-
लिजंतीत्यादि ' आसकलीक्रियते आक्षिप्यंत इत्यर्थः, तथा परिपोसिज्जंति ' परिपोष्यंते भावोपच-
येन, तथा ' णिमविज्जंति ' निर्माप्यंते परिसमाप्तिं नीयंते. क इत्याह—' सुहकम्माणुबंधा ' कु-
शलकर्मानुबंधा इति भावः. ततः किमित्याह—' सोणुबंधसुहकम्मं ' सानुबंधं च शुभकर्म आत्यं-
तिकानुबंधापेक्षं किंविशिष्टमित्याह–' पगिठं ' प्रकृष्टं प्रधानं ' पगिठभावज्जियं ' प्रकृष्टभावार्जितं शु-
भभावार्जितमित्यर्थः, नियमफलदं प्रकृष्टत्वेनैव तदेवंभूतं किमित्याह–' सुप्पयुत्तेवि य महागदे '
सुप्रयुक्त इव महागद एकांतकल्याणः ' सुहफले सिया ' शुभफलं स्यादनंतरोदितं कर्म, तथा '
सुहपवत्तगे सिया ' शुभप्रवर्तकं स्यादनुबंधेन, एवं ' परमसुहसाहगे सिया ' परमसुखसाधकं स्या-

त्, पारपर्येण निर्वाणप्रदमित्यर्थ यत एव ' अओ अपडिबधमेय ' अस्मात्कारणात् अप्रतिबधमेत
द् प्रतिबधरहितमनिदानमित्यर्थ ' असुहभावनिरोहेण सुहभावबीजति ' अशुभभावनिरोधेन अ
शुभानुबधनिरोधेनेत्यर्थ, शुभभावबीजमिति कृत्वा एतत्सूत्र ' सुप्पणिहाण ' सुप्रणिधान शोभनेन
प्रणिधानेन ' सम्म पढियव्व सोयव्व अणुप्पेहियव्वति ' सम्यक्प्रशातात्मना पठितव्यमध्येतव्य श्रोत
व्य तत्वाख्यानविधिना अनुप्रेक्षितव्य परिभावनीयमिति ' न च होउ मे एसा अणुमोदना सम्म
विहिपुव्विगा ' इत्यादिनानिदानत्वात्, अस्य च तल्लक्षणायोगात् अनीदृशस्य वानिदानत्वात् प्रार्थ
नादेरपि निदानत्वप्रसगात्, तथा चागमविरोधात्, आरुग्गबोहिलाभ समाहिवरमुत्तम दित्वित्यादि
वचनश्रवणादित्यल प्रसगेन सूत्रपरिसमाप्ताववसानमगलमाह—' णमो णमियणमिआणमित्यादि'
नमो नतनतेभ्य देवऋषिवदितेभ्य इत्यर्थ, केभ्य इत्याह—' परमगुरुवीतरागाण ' परमगुरुवीत
रागेभ्य इति यावत् ' णमो सेसणमोकारहाण ' नम शेषनमस्कारार्हेभ्य आचार्यादिभ्यो गुणा-
धिकेभ्य इति भाव ' जयउ सव्वणुसासण ' जयतु सर्वज्ञशासन कुतीर्थापोहेन, ' परमसबोहीए सु
हिणो भवतु जीवा इति ' परमसबोधिता प्रवरबोधिता तथा सुखिनो भवतु मिथ्यात्वदोषनिवृत्त्या

जीवाः प्राणिन इति. अयं वारतयं पाठः ३. 'पावपडिघायगुणबीजाधाणसुत्तं सम्मत्तं' पापप्रतिघातेन अकुशलानुबंधाश्रवव्यवच्छेदेन गुणबीजाधानं, भावतः प्राणातिपातविरमणमिति तत्त्वन्यासः, तथानुबंधतो विचित्रविपाकवत्कर्माधानमित्यर्थः, एतत्सूचकं सूत्रं पापप्रतिघातधर्मगुणबीजाधानसूत्रं समाप्तमिति. पंचसूत्रकव्याख्यायां प्रथमसूत्रव्याख्या समाप्ता ॥ श्रीरस्तु ॥

---

अधुना द्वितीयसूत्रव्याख्या प्रस्तूयते—अस्य चायमभिसंबंधः—इह धर्मगुणबीजमाहितं, तद्वैचित्र्यात्तत्कालादिनिमित्तभेदेन विपच्यते, एतदाभिमुख्येन तत एव धर्मगुणप्रतिपत्तिश्रद्धोपजायते, तस्यां समुपजातायां यत्कर्तव्यं तदभिधातुमाह—'जायाए धम्मगुणपडिवत्तिसद्धाए' इत्यादि, जातायां धर्मगुणप्रतिपत्तिश्रद्धायां भावतस्तथाविधकर्मक्षयोपशमेन भावयेत् एतेषां स्वरूपं धर्मगुणानां प्रकृतिसुंदरत्वं जीवसंक्लेशविशुध्यां आनुगामुकत्वं भवांतरवासनानुगमेन परोपकारित्वं तथा पीडादिनिवृत्त्या परमार्थहेतुत्वं परंपरया मोक्षसाधनत्वेन, तथा दुरनुचरत्वं सदैवानभ्यासात्, भंगे दारुणत्वं भगवदाज्ञाखंडनतो महामोहजनकत्वं धर्मदूषकत्वेन भूयो दुर्लभत्वं विपक्षानुबंधिष्विति

भाव इति एवमुक्तेन प्रकारेण यथाशक्ति शक्त्यनुरूप न तन्न्यूनाधिकाभ्यां उचितविधानमेव शास्त्रोक्तेन विधिना अत्यन्तभावसारमहता प्रणिधानन्तेन प्रतिपद्येत धर्मगुणान, न रासन्निकया प्रवृत्त्या अस्या विपाकदारुणत्वात, किन्नूतांस्तानित्याह—' त जहेत्यादि ' तद्यथा—स्थूरप्राणातिपातविरमण स्थूरमृषावादविरमण स्थूरादत्तादानविरमण स्थूरमैथुनविरमण स्थूरपरिग्रहविरमणमित्यादि आदिशब्दाडुत्तरगुणपरिग्रह, आदावुपन्यासश्चैषा भावत इत्थमेव प्राप्तेरिति, उक्त च—सम्मत्तमिउ लद्धे । पलियपुहुत्तेण सावउ होज्जा ॥ चरणोवसम्मखयाण । सागरसखनरा होति ॥ १ ॥ एव—अपडिक्किए सम्मत्ते । देवमणुयजम्मेसु ॥ अणतरसेढिवज्जा । एगन्नवेण व सवाइ ॥ २ ॥ इत्यादि, ' पम्विज्जिउण इत्यादि ' प्रतिपद्य पालने यतेत अधिकृतगुणानां, कथमित्याह—सदाज्ञाग्राहक स्यात् अध्ययनश्रवणाभ्यां, याज्ञा आगम उच्यते, सदाज्ञाभावक स्यात् अनुप्रेक्षाद्वारेण, सदाज्ञापरतन्त्र स्यादनुष्ठानप्रति, किमेवमित्याह—आज्ञा हि मोहविषपरममन्त्रस्तदपनयनेन, जल द्वेषादिज्वलनस्य तद्विध्यापनेन, कर्मव्याधिचिकित्साशास्त्र तत्क्षयकारणत्वेन, कल्पपादप शिवफलस्य तत्साधकत्वेन तथा ' वज्जेज्जा इत्यादि ' वर्जयेत् अधर्ममित्रयोग अकल्याणमित्रसबध

चिंतयेत् अभिनवप्राप्तान् गुणान् स्थूरप्राणातिपातविरमणादीन्, अनादिभवसंगतांश्च अगुणान् सदैवाविरतत्वेन उदग्रसहकारित्वमधर्ममित्राणि अगुणान् प्रति उभयलोकगर्हितत्वं तत्पापानुमत्यादिना, अशुभयोगपरंपरा च अकुशलानुबंधतः, तथा ' परिहरिज्जा ' इत्यादि, परिहरेत् सम्यग्लोकविरुद्धानि तदशुभाध्यवसायादिनिबंधनानि, अनुकंपापरो जनानां माभूत्तेषामधर्मः, न हिंसयेद् धर्मं न गर्हयेज्जैनैरित्यर्थः, संक्लेशयत्येवैषा हिंसाऽशुभभावत्वेन परमबोधिबीजं, तत्प्रद्वेषेण अबोधिफलमात्मन इति जनानां तन्निमित्तभावेन. तथा एवमालोचयेत् सूत्रानुसारेण न खल्वतः परोऽनर्थः, अबोधिफलात् तत्कारणभावाद्वा लोकविरुद्धत्वादिति. अंधत्वमेतत्संसाराटव्यां हि तद्दर्शनाभावेन, जनकमनिष्टपातानां नरकाद्युपपातकारणतया, अतिदारुणं स्वरूपेण संक्लेशप्रधानत्वात्, अशुभानुबंधमत्यर्थं परंपरोपघातभावेनैतत्, तथोक्तं—लोकः खल्वाधारः । सर्वेषां धर्मचारिणां यस्मात् ॥ तस्माल्लोकविरुद्धं । धर्मविरुद्धं च संत्याज्यं ॥ १ ॥ इत्यादि. तथा ' सेवज्जा इत्यादि ' सेवेत धर्ममित्राणि विधानेन सत्प्रतिपत्त्यादिना, अंध इवानुकर्षकान् पातादिभयेन, व्याधित इव वैद्यान् दुःखभयेन, दरिद्र इवेश्वरान् स्थितिहेतुत्वेन, भीत इव महानायकानाश्रयणीयत्वेन, तथा न इतो ध-

र्ममित्रसेवनात् सुदरतरमन्यदिति कृत्वा वहुमानयुक्त स्यात्, धर्ममित्रेषु आज्ञाकारी अदत्तायामस्या तेपामाज्ञाप्रतीच्छक, प्रदानकाले तेपामेवाज्ञाविधायक, प्रस्तुताया तेपामेव आज्ञानिष्पादक इत्यौचित्येन तेपामेव ' पम्भिवन्नेत्यादि ' प्रतिपन्नधर्मगुणार्हश्च वर्तेत, सामान्येनैव गृहस्थाना सम्यगुचितेपु गृहिसमाचारेपु द्वादशव्रतेपु परिशुद्धानुष्ठानकरणेन मनोवाक्काययोगै परिशुद्धमन क्रिय शास्त्रानुसारेण परिशुद्धवाक्क्रिय, अनेनैव परिशुद्धकायक्रिय अनेनैव, एतद्विशेपणमभिधातुमाह—वर्जयेदनेकोपघातक सामान्येन गर्हणीय प्रकृत्या वहुक्लेश प्रवृत्तौ आयतिविराधक परलोकपीडाकर समारम्भ अगारकर्मादिरूप तथा न चितयेत परपीडा सामान्येन न भावयेद्दीनता कस्यचिदसम्प्रयोगे न गच्छेद्दर्प कस्यचित् सम्प्रयोगे न सेवेत वितथाभिनिवेश अतत्वाध्यवसाय, किंतु उचितमन प्रवर्तक स्याद्वचनानुसारेण, एव न भाषेतानृतमभ्याख्यानादि, न परुप निष्टुर, न पैशून्य परप्रीतिहारि नानिवद्ध विकथादि, किंतु हितमितभापक स्यात् सूत्रनीत्या, एव न हिस्याद्भूतानि पृथिव्यादीनि, न गृह्णीयाददत्त स्तोकमपि, न निरीक्षेत परदार रागत, न कुर्यादनर्थदण्ड अपध्यानाचरितादि, किंतु शुभकाययोग स्यादागमनीत्या, तथा ' लाभोचियदाणेत्यादि ' तथा ला

भोचितदानः अष्टभागाद्यपेक्षया, तथा लाभोचितभोगः अष्टभागाद्यपेक्षया, लाभोचितपरिचारः चतुर्भागादिभव्यत्वपरिणामेन लाभोचितनिधिकारः स्यात् चतुर्भागाद्यपेक्षयैव, उक्तं च लौकिकैः— पादमायान्निधिं कुर्यात् । पादं वित्ताय वर्धयेत् ॥ धर्मोपयोगयोः पादं । पादं भर्तव्यपोषणे ॥ १ ॥ तथान्यैरप्युक्तं—आयादर्धं नियुंजीत । धर्मे यद्वाधिकं ततः ॥ शेषेण शेषं कुर्वीत । यत्नतस्तुच्छमैहिकं ॥ २ ॥ इत्यादि, तथा असंतापकः परिजनस्य स्यादिति वर्तते, शुभप्रणिधानेन गुणकरो यथाशक्ति भवस्थितिकथनशीलत्वेन अनुकंपापरः प्रतिफलनिरपेक्षतया निर्ममो भावेन भवस्थित्यालोचनात् एवंगुणः स्यादित्याह—एवं यस्मात्तत्पालनेऽपि धर्मः जीवोपकारभावादेवान्यपालन इति जीवाविशेषेण, किमित्येतदेवमित्याह—सर्वे जीवाः पृथग्पृथग् वर्तते स्वलक्षणभेदेन, किंतु ममत्वं बंधकारणं लोभरूपत्वात्, उक्तं च—संसारांबुनिधौ स्वस्व—कर्मोर्मिपरिघट्टिताः ॥ संयुज्यंते वियुज्यंते । तत्र कः कस्य बांधवः ॥ १ ॥ तथा—अत्यायतेऽस्मिन् संसारे । भूयो जन्मनि जन्मनि ॥ सर्वो नैवास्त्यसौ कश्चि—द्यो न बंधुरनेकधा ॥ २ ॥ इत्यादि सर्वथा परिभावनामात्रमेतत् स्वजनो न स्वजन इति. ‘ तहा तेसु तेसु इत्यादि ’ तथा तेषु तेषु समाचारेषु इत्यादि गृहिस-

मुचितेष्विति वर्तते स्मृतिसमन्वागत स्यात् आभोगयुक्त कथमित्याह—अमुकोऽह देवदत्तादिना
मा अमुककुल इक्ष्वाकाद्यपेक्षया, अमुकशिष्यो धर्मतस्तत्तदाचार्यापेक्षया, अमुकधर्मस्थानस्थित
अणुव्रताद्यपेक्षया, न मम तद्विराधना साम्प्रत न मम तदारम्भो विराधनारम्भ, तथा वृद्धिर्ममैतस्य
धर्मस्थानस्य एतदत्र सार, धर्मस्थान एतदात्मनूतमानुगामुकत्वेन, एतद्धित सुदरपरिणामत्वेन, अ
सारमन्यत्सर्वमर्थजातादीति, विशेषतोऽविधिग्रहणेन विपाकदारुणत्वात्, यथोक्त—पापेनैवार्थरागां
ध । फलमाप्नोति यत्किचित् ॥ वडिशामिषवत्तत्तु । विना नाश न जीर्यति ॥ १ ॥ इति एतदेव
मेवेत्याह—एवमाह त्रिलोकबधु समुपदितपुण्यसभार परमकारुणिक, तथाऽनन्यत्वनियोगात् स
म्यक्सबुद्धोऽनुत्तरबोधनीजत, भगवान्नर्हत्सत्वविशेष इति एव समालोच्य तदविरुद्धेपु अधिकृतध
र्मस्थानाविरुद्धेपु समाचारेपु विचित्रेपु सम्यग्वर्तेत सूत्रनीत्या, भावमगलमेतद्विधिना वर्तन, तन्निष्प
त्तेरधिकृतसमाचारनिष्पत्तिरिति ' तदा जागोरेतेत्यादि ' तथा जागृयात् भावनिद्राविरहेण धर्मजाग
रया तत्वालोचनरूपया, को मम कालो वयोऽवस्थारूप, किमेतस्योचित धर्माद्यनुष्ठानं, असारा वि
पयास्तुच्छा शब्दादयो नियतगामिनो वियोगांता विरसावसाना परिणामदारुणा, तथा भयानको

मृत्युर्महाभयजननः सर्वाभावकारी तत्साध्यार्थक्रियाभावात्, अविज्ञातागमनोऽदृश्यस्वभावत्वान्मृत्योः, अनिवारणीयः स्वजनादिबलेन, पुनः पुनरनुबंधी अनेकयोनिभावेन, धर्म एतस्यौषधं मृत्योर्व्याधि-कल्पस्य, किंविशिष्ट इत्याह—एकांतविशुद्धो निवृत्तिरूपो, महापुरुषसेवितस्तीर्थकरादिसेवितः, सर्वहितकारी मैत्र्यादिरूपतया, निरतिचारो यथागृहीतपरिपालनेन परमानंदहेतुर्निर्वाणकारणमित्यर्थः. ‘ णमो इमेसेत्यादि ’ नम एतस्मै धर्माय अनंतरोदितरूपाय, नम एतद्धर्मप्रकाशकेभ्योऽर्हद्भ्यः, नम एतद्धर्मपालकेभ्यो यतिभ्यः, नम एतद्धर्मप्ररूपकेभ्यो यतिभ्य एव, नम एतद्धर्मप्रतिपत्तृभ्यः श्रावकादिभ्यः, इच्छाम्यहमेनं धर्मं प्रतिपत्तुमनेनैतत्पक्षपातमाह—सम्यमनोवाक्काययोगैः, अनेन तु संपूर्णप्रतिपत्तिरूपं प्रणिधिविशेषमाह—भवतु ममैतत्कल्याणं अधिकृतधर्मप्रतिपत्तिरूपं परमकल्याणानां जिनानामनुभावतस्तदनुग्रहेणेत्यर्थः, सुप्रणिधानमेवं चिंतयेत्पुनः पुनः, एवं हि स्वाशयादेवैतन्निमित्तोऽनुग्रह इति. तथा एतद्धर्मयुक्तानां यतीनां अवपातकारी स्यात् आज्ञाकारीति भावः, प्रधानं मोहच्छेदनमेतत् तदाज्ञाकारित्वं, तन्मोहच्छेदनयोगनिष्पंगतयेति हृदयं. एवं कुशलाभ्यासेन विशुध्यमान एतत्सेवक इति प्रक्रमः, भावनयोक्तरूपया कर्मापगमेन हेतुना उपैत्येतस्य धर्मस्य यो-

ग्यता, एतदेवेत्याह—तथा ससारविरक्त स्वदोषभावनया सविग्नो भवति मोक्षार्थी अममो मम त्वरहित अपरोपतापी परपीडापरिहारात्, विशुद्धो ग्रथ्यादिभेदेन, विशुध्यमानभाव शुक्लकडकवृ द्धेति साधुधर्मपरिभावनासूत्र समाप्त भावत साधुधर्मप्राप्त्युपायभुतार्थसूचक सूत्र समाप्त ॥ इति पचसूत्रकव्याख्याया द्वितीतसूत्रव्याख्या समाप्ता ॥ श्रीरस्तु ॥

---

अधुना तृतीयसूत्रव्याख्या प्रक्रम्यते, अस्य चायमभिसबध, अनतरसूत्रे जाताया धर्मगुणप्र तिपत्तिश्रद्धाया यत्कर्तव्य तदुक्त, तच्च कुर्वता साधुधर्म परिभावितो भवति, तस्मिन परिभाविते य त्कर्तव्य तदभिधातुमाह—परिभाविते साधुधर्मे अनतरसूत्रोदितेन विधिना यथोदितगुण ससार विरक्त सविग्न अमम अपरोपतापी विशुद्ध विशुध्यमानभाव सन् यतेत सम्यग्विधिना अमु ध र्म प्रतिपत्तु कथमित्याह—अपरोपतापमिति क्रियाविशेषण, किमेतदाश्रीयत इत्याह—परोपता पो हि तत्प्रतिपत्तिविघ्न परोपतापो यस्माद्धर्मप्रतिपत्त्यतराय एतदेवाह—अपाय एवैष धर्मप्रतिप त्तौ परोपताप कथमित्याह—न खल्वकुशलारभतो हित, अकुशलारभश्च धर्मप्रतिपत्तावपि परोप

तापः, न चान्यस्तत्र प्रायोऽयं संभवतीति संभवपरिहारार्थमाह—अप्रतिबुद्धौ कथंचित्कर्मवैचित्र्यतः प्रतिबोधयेन्मातापितरौ, ननु प्रायो महासत्वस्यैतावप्रतिबुद्धौ भवत इति कथंचिदित्याह, उभयलोकसफलं जीवितं प्रशस्यत इति शेषः. तथा समुदायकृतानि कर्माणि प्रक्रमाच्छुभानि समुदायफलानीत्यनेन भूयोऽपि योगाक्षेपस्तथा चाह—एवं सुदीर्घो वियोगः भवपरंपरया सर्वेषामस्माकमिति प्रक्रमः, अन्यथैवमकरणे एकवृक्षनिवासिशकुनतुल्यमेतच्चेष्टितमिति शेषः, यथोक्तं—वासवृक्षं समागत्य । विगच्छंति यथांडजाः ॥ नियतं विप्रयोगांत—स्तथाभूतसमागमः ॥ १ ॥ इत्यादि, एतदेव स्पष्टयन्नाह—उद्दामो मृत्युः अनिवारितप्रसरः प्रत्यासन्नश्चाल्पायुस्त्वेन. तथा दुर्लभं मनुजत्वं भवाब्धाविति शेषः, अत एवाह समुद्रपतितरत्नलाभतुल्यं अतिदुरापमित्यर्थः. कुत इत्याह—अन्यभवाः पृथिवीकायादिसंबंधिनः कायस्थित्या, यथोक्तं—असंखोसप्पिणिउसप्पिणीउ एगिंदियाण चउण्हं ता चेवउ अणंतावणस्सइए बोधवा. एते च दुःखबहुला उत्कटासातवेदनीया मोहांधकाराः, तदुदयतीव्रतया अकुशलानुबंधिनः प्रकृत्याऽसच्चेष्टाहेतुत्वेन. यत एवासतः अयोग्याः शुद्धधर्मस्य चारित्रलक्षणस्य, योग्यं चैतन्मनुजत्वं किंविशिष्टमित्याह—पोतभूतं भवसमुद्रे तदुत्तारकत्वेन,

पत्र यत एवमतो युक्त स्वकार्ये नियोक्तु धर्मलक्षणे, कथमित्याह—सवरस्थगितछिद्रं छिद्राणि प्राणा
तिपाताविरमणादीनि, तथा ज्ञानकरणधारमजीवण तदुपयोगत , तप पवनजवन अनशनाद्यालोच
टीप। नतया, एव युक्त स्वकार्ये नियोक्तु, किमित्यत आह—क्षण एप दुर्लभ क्षण प्रस्ताव सर्वका
२७ र्योपमातीत एप , कथमित्याह—सिद्धिसाधकत्वेन हेतुनादेया चैपा जीवाना सिद्धिरेव, यन्नास्या
सिद्धौ जन्म प्रादुर्भावलक्षण, न जरा वयोहानिलक्षणा, न मरण प्राणत्यागलक्षण, नेष्टवियोगस्त
दभावात्, नानिष्टसप्रयोगोऽत एव हेतो , न क्षुद्बुभुक्षारूपा, न पिपासा उदकेच्छारूपा, न वान्य
कश्चिद्दोप शीतोष्णादि , सर्वथाऽपरतन्त्र जीवावस्थान अस्या सिद्धाविति प्रक्रम अशुभरागादिर
हितमेतदवस्थान, एतदेव विशेष्यते—शांत शिवमव्याबाधमिति, शात शक्तितोऽपि क्रोधाद्यभावे
न, शिव सकलाशिवाभावत , अव्याबाध नि त्रियत्वेनेति ' विपरीत य ' इत्यादि, विपरीतश्च म
सारोऽस्या सिद्धेर्जन्मादिरूपत्वात, सर्वोपद्रवालयोऽय यदाह—जरामरणदौर्गत्य—व्याधयस्तावदा
सतां ॥ मन्ये जन्मापि वीरस्य । भूयोभूयस्त्रपाकर ॥ १ ॥ अत एवाह—अनवस्थितस्वभाव ससा
र, अत्र खलु सुख्यप्यसुखी पर्यायत सदप्यसत् स्वप्न इव सर्वमास्थाभावेनेति, यत एव तदलमत

प्रतिबंधेन संसारे, कुरुत ममानुग्रहं, कथमित्याह—उद्यच्छतैनं व्यवच्छेत्तुं संसारं यूयं, अहमपि यु-ष्माकमनुमत्या साधयाम्येतद्व्यवच्छेदनं, किमित्यत आह—निर्विण्णो जन्ममरणाभ्यां संसारगामिभ्यां, समृध्यति च मम समीहितं संसारव्यवच्छेदनं गुरुप्रभावेण, एवं शेषाण्यपि ज्ञार्यादीनि बोधयेदौचि-त्योपन्यासेन, ततः सममेभिर्मातापित्रादिभिः सेवेत धर्मं चारित्रलक्षणं. कथमित्याह—निराशंस एव सर्वदा इहलोकपरलोकाभ्यां, एतत्परममुनिशासनं वीतरागवचनमित्यर्थः, 'अबुध्यमानेषु' इत्यादि, अबुध्यमानेषु च मातापित्रादिषु कर्मपरिणत्या हेतुभूतया विदध्यात् यथाशक्ति शक्त्यनु-सारेण तदुपकरणमर्थत्यागादीत्यर्थः, कारणे कार्योपचारात्, किंभूतमित्याह—आयोपायशुद्धं स्व-मत्या ततोऽन्यसंभूतिरायः कलांतरादिरुपायः, किमेतदेवं कुर्यादित्याह—कृतज्ञतैवैषा वर्तते करुणा च, किंविशिष्टेयमित्याह—धर्मप्रधानजननी जने शासनोन्नतिनिमित्तमित्यर्थः, ततोऽनुज्ञातः सन् मातापित्रादिभिरिति प्रक्रमः, प्रतिपद्येत धर्मं चारित्रलक्षणं. अन्यथैवमपि तदनुज्ञाभावे अनुपध ए-व भावत उपधायुक्तः स्यादित्यर्थः. उक्तं च—निर्माय एव भावेन । मायावांस्तु भवेत् क्वचित् ॥ पश्येत्स्वपरयोर्यत्र । सानुबंधं हितोदयं ॥ १ ॥ एवं च धर्माराधनमेव हितं सर्वसत्वानामिति. तथा

तथैव तु स्वप्नादिकथनेन सपादयेद्धर्माराधन, सर्वथा अप्रतिपद्यमानात् अमुनापि प्रकारेण त्यजेत्ता न्मातापित्रादीन्, अस्थानग्लानौषधार्थत्यागज्ञातेन, ज्ञातमुदाहरण, एतदेवाह—' से जहेत्यादि ना ' तद्यथा—कश्चित्पुरुषो विवक्षित कथचित्कातार गत सन् मातापितृसमेत, न्यायोपलक्षण मेतत्, तत्प्रतिबद्धो व्रजेत्, तयोर्मातापित्रोस्तत्र कातारे नियमघाती पुरुषमात्रासाध्य सन्नवदौषधो मद्दांतक स्यात्, आतक सद्योघाती रोग, तत्रासौ पुरुष तत्प्रतिबधान्मातापितृप्रतिबधेन एवमा लोचयेद्यदेतौ मातापितरौ न भवतो नियमत औषधमतरेणौषध विना, औषधभावे च सशय, कदाचिद्भवतोऽपि कालसहावेतौ मातापितरौ, तथा तेन वृत्त्याच्छादनादिना प्रकारेण सस्थाप्य तदौ षधनिमित्त तयोर्मातापित्रोरौषधार्थ स्ववृत्तिनिमित्त च आत्मवृत्त्यर्थ च त्यजन् साधु शोभन, कथ मित्याह—एष त्यागोऽत्याग सयोगफलत्वात्, अत्याग एव त्यागो वियोगफलत्वात्, यदि नामैव त त किमित्यत आह—फलमत्र प्रधान बुधाना पडितानां धीरा एतद्दर्शिनो निपुणबुद्ध्या फलदर्शि न, स ते इत्यादि स पुरुषस्तौ मातापितरौ औषधसपादनेन जीवयेत्, सभवत्येतदत एवाह—स सभवात्पुरुषोचित मे तद्यदुतेद्य त्याग इति एष दृष्टांतोऽयमर्थोपनय इत्याह—एवमित्यादिना एव

शुक्लपाक्षिको महापुरुषः परीतसंसार इत्यर्थः, यथोक्तं—जस्स अवड्ढो पोग्गल—परियट्टो सेसओ
संसारो ॥ सो सुक्कपक्खिओ खलु । अहिगे पुन्न कण्हपक्खीओ ॥ १ ॥ किमयमित्याह—संसारकां-
तारपतितः सन् मातापितृसंगत उपलक्षणमेतत् भार्यादीनां, धर्मप्रतिबद्धो विहरति, तयोर्मात्रापि-
त्रोस्तत्र संसारकांतारे नियमविनाशकः अप्राप्तबीजादिपुरुषमात्रासाध्यः संभवत्सम्यक्त्वाद्यौषधः मर-
णादिविपाकः कर्मातंकः स्यात् क्लिष्टकर्मेत्यर्थः. तत्रासौ शुक्लपाक्षिकपुरुषः धर्मप्रतिबंधाद्धेतोः एवं स-
मालोच्य विनश्यत एतौ मातापितरौ अवश्यं सम्यक्त्वाद्यौषधविरहेण सम्यक्त्वाद्यौषधाभावेन, तत्सं-
पादनेन सम्यक्त्वाद्यौषधसंपादने विभाषा कदाचिदेतत्संपादयितुं शक्यते, कदाचिन्नेत्येवंरूपा, का-
लसहौ चैतौ व्यवहरतः, तथा जीवनसंभवान्निश्चयतस्तु न, यथोक्तं—आयुषि बहूपसर्गे । वाताहत-
सलिलबुद्बुदानित्ये ॥ उच्छ्वस्य निःश्वसीति यः । सुप्तो वा यद्विबुध्यते तच्चित्रं ॥ १ ॥ तथा ते-
न सौहित्यापादनप्रकारेण संस्थाप्य इहलोकचिंतया तयोर्मातापित्रोः सम्यक्त्वाद्यौषधनिमित्तं
विशिष्टगुर्वादिभावेन धर्मकथादिभावात् स्ववृत्तिनिमित्तं च कृत्यकरणेन हेतुना त्यजन्संयमप्रतिपत्त्या
तौ मातापितरौ साधुधर्मशीलः सिद्धौ सिद्धविषये, किमित्येतदेवमित्याह—एष त्यागोऽत्यागस्तत्व-

भावनातस्तद्धितप्रवृत्ते स्त्याग एव त्यागो मिथ्यात्वाभावनातस्तदहितप्रवृत्ते, तत्फल सानुबधमत्र प्रधान बुधाना परमार्थत परमार्थेन धीरा एतद्दर्शिन आसन्नभव्या नान्ये, स ते इत्यादि, स शुक्ल पाक्षिक पुरुषस्तौ मातापितरौ सम्यक्त्वाद्यौषधसपादनेन जीवयेदात्यतिक, कथमित्याह—अमरण मरणावध्यबीजयोगेन चरममरणाबध्यकारणसम्यक्त्वादियोगेनेत्यर्थ, सभवत्येतदत एवाह—सभवा त्सुरुषोचितमेतद्यद्भक्तैनैव तत्त्याग इति किमित्यत आह—दु प्रतिकारौ मातापितरौ इति कृत्वा ए प धर्म सता सत्पुरुषाणा, भगवानत्र ज्ञात महावीर एव परिहरन् गर्भाभिग्रहप्रतिपत्त्या अकुशला नुबधिन तथा कर्मपरिणत्या मातापितृशोक प्रव्रज्याग्रहणोद्भवमित्युक्त च—अह सत्तमम्मि मासे। गम्भत्थो चेवभिग्गह गिण्हे ॥ णाह समणो होह। अम्मापियरे जियतम्मि ॥ १ ॥ प्रस्तुतनिग- मनायाह—एवमपरोपताप सर्वथा सम्यक्प्रव्रजेदिति योग विधिशेषमाह—सुगुरुसमीपे नान्यत्र, पूजित्वा भगवतो महावीर जिनान् तथा साधून् यतीन् तोषित्वा विभवोचित कृपणादीन् दु खितस त्वानित्यर्थ, सुप्रयुक्तावश्यक समुचितेन नेपथ्यादिना स विशुद्धनिमित्त प्रतियोग समभिवासितो गुरुणा गुरुमंत्रेण विशुद्ध्यमानो महता प्रमोदेन लोकोत्तरेण सम्यग् भाववदनादिना शुद्ध्या प्रव

जेत्, किमुक्तं भवति? लोकधर्मेभ्यः संक्लेभ्यः लोकोत्तरधर्मगमनेन प्रकर्षेण प्रव्रजेदित्यर्थः, एषा जिनानामाज्ञा यदुतैवं प्रव्रजितव्यं, इयं च महाकल्याणेति कृत्वा न विराधितव्या बुधेन नान्यथा कर्तव्येत्यर्थः. कस्मादित्याह—महानर्थभयात्, नाज्ञाविराधनतोऽन्योऽनर्थः, अर्थवत्तदाराधना, इत्यत एवाह—सिद्धिकांक्षिणा मुक्त्यर्थिनेति, न खल्वाज्ञाराधनातोऽन्यः सिद्धिपथ इति भावनीयं, प्रव्रज्याग्रहणविधिसूत्रं समाप्तं, तत्वतः प्रव्रज्याग्रहणविध्यर्थसूचकं समाप्तं सूत्रं. इति पंचसूत्रकव्याख्यायां तृतीयसूत्रव्याख्या समाप्ता ॥ श्रीरस्तु ॥

---

सांप्रतं चतुर्थसूत्रव्याख्यारभ्यते, अस्य चायमभिसंबंधः—अनंतरसूत्रे साधुधर्मं परिभाविते यत् कर्तव्यं तदुक्तं, तच्च विधिना प्रव्रज्यादौ ग्राह्यतत्, अस्याश्चर्यामभिधातुमाह—स एवमभिपवईए समाणे सुविहिभावतो किरियाफलेण जुज्जतीत्यादि, स प्रस्तुतो मुमुक्षुः एवमुक्तेन विधिना अभिप्रव्रजितः सन् सुविधिभावतः कारणात् क्रियाफलेन युज्यते, सम्यक्क्रियात्वादधिकृतक्रियायाः, स एव विशेष्यते—विशुद्धचरणो महासत्वः, य एवंभूतः, अतो विपर्ययमिति मिथ्याज्ञानरूपं, एतदभावे

विपर्ययाभावो अभिप्रेतसिद्धि सामान्येनैव, कुत इत्याह—उपायप्रवृत्ते, इयमेव कुत इत्याह—नाविपर्यस्तोऽनुपाये प्रवर्तते, इयमेवाविपर्ययस्तस्याविपर्ययस्ततो यदुतोपाये प्रवृत्तिरन्यथा तस्मिन्नेव विपर्यय, एवमपि किमित्याह—उपायश्चोपेयसाधको नियमेन कारण कार्याव्यभिचारीत्यर्थ एत ज्ञानस्वभावस्य तत्कारणत्वायोगादतिप्रसगात्, एतदेवाह—तत्स्वतत्त्वत्याग एवोपायोऽन्यथा स्वमु पेयमसाध्यत कुत इहातिप्रसगात्, तदसाधकत्वाविशेषेणानुपायस्याप्युपायकत्वप्रसगात्, न चैव व्य वहारोच्छेद आशकनीय इत्यर्थ, निश्चयमतमेतदिति सूक्ष्मबुद्धिगम्य, सेसमेत्यादि, स एव समभि प्रव्रजित समलोष्टकाचन सन् समशत्रुमित्र एव निवृत्ताग्रहदु ख अत स प्रशमसुखमेत अधि कारितया सम्यक् शिक्षामादत्ते ग्रहणासेवनारूपा, कथमित्याह—गुरुकुलवासी अनेन गुरुप्रतिरू तद्बहुमानात्, विनीतो नाह्यविनयेन, भूतार्थदर्शी तत्वार्थदर्शी, न इतो गुरुकुलवासात् हिततत्वमि ति मन्यते वचनानुसारित्वात्, वचन च—णाणस्स होइ भागी । थिरयरउ दसणे चरित्ते य ॥ धणा आवकहाए । गुरुकुलवास ण मुचति ॥ १ ॥ स खल्वल सुश्रुषादिगुणयुक्त, सुश्रुषाश्रवण ग्रहणधारणाविज्ञानोहापोहतत्वाभिनिवेशा प्रज्ञागुणा इत्येतद्युक्त, तत्वाभिनिवेशाद्विधिपर, तत

किमित्याह—परममंत्रो रागादिविषघ्नतयेति कृत्वा अधीते सूत्रं पाठश्रवणाभ्यां. किंविशिष्टः सन्नित्याह—बद्धलक्षो अनुष्ठेयंप्रति आसंसाविप्रमुक्तः इहलोकाद्यपेक्षया, आयतार्थी मोक्षार्थी, अत एव स एवंभूतः, तत्सूत्रमवैति सर्वथा याथातथ्येन, ततः किमित्याह—ततोऽवगमात् सम्यग्नियुंजते तत्सूत्रं, एतद्धीराणां शासनं, यदुतैवमधीतं सम्यग्नियुक्तमिति. अन्यथा अविध्यध्ययने अनियोगः, नियोगादन्योऽनियोगः, विपर्ययान्नियोग इत्यर्थः. अत एवाह—अविधिगृहीतमंत्रज्ञातेन तत्रापि ग्रहादिभावाद्विपर्ययात् योग एव, अनाराधनायामेकांतेन प्रवृत्तस्य न किंचिदिष्टमनिष्टं वा फलं मोक्षान्मोहादि सदनुष्ठानं हि मोक्षफलमेव, यथोक्तं—श्रामणस्य फलं मोक्षः । प्रधानमितरत्पुनः ॥ तत्वतोऽफलमेवेह । ज्ञेयं कृषिपलालवत् ॥ १ ॥ भंगस्याप्युन्मादाद्येव, यथोक्तं—उन्मादंवलभेजा—रोगातंकं वपाउणोदीहं ॥ केवलिपणत्ताउ । धम्माउ वा विसंभेज्जा ॥ १ ॥ न पुनरसम्यक्त्वमेव, कथमत्रानाराधनायां न किंचिदित्याह—तदनारंभतो ध्रुवं तत्वतस्तस्यानारंभात्. न चान्यस्मिन्नेवोद्भवत्यतिप्रसंगात्. इहैव लिंगमाह—अत्रानाराधनायां मार्गदेशनायां तात्विकायां दुःखं शृण्वतो भवत्युक्तं च—शुद्धदेशना हि क्षुद्रसत्वमृगयूथसंत्रासनसिंहनादः, तथा अवधीरणा मनाग्लघु

तरकर्मणो न दुःख तथा अप्रतिपत्तिस्ततोऽपि लघुतरकर्मिणो नावधीरणा, तत किमित्याह—नैव मनाराधनयाधीतमधीते सूत्र तत्वत, कुत इत्याह—अवगमविरहेण सम्यगवबोधाभावेन नैषा मार्गगामिन एकान्तमनाराधना भवति, सम्यक्त्वादिभावे सर्वथा सत्क्रियायोगात् अत एवाह—विराधनेत्यादि विराधनाप्रमादध्ययनस्य अनर्थमुखा उन्मादादिभावेन, अय च गुरुतरदोषापेक्षयार्थहेतु, पारपर्येण मोक्षागमेवेत्यर्थ कुत इत्याह—तस्यारम्भाद् ध्रुव मोक्षागमनस्यैवारम्भात् कटकज्वरसन्मोहयुक्तस्येव सद्ध्वनि एतद्भावे लिगमाह—अत्र विराधनाया सत्या मार्गदेशनायां पारमार्थिकाया अनभिनिवेश शृण्वतो भवति, हेयोपादेयतामधिकृत्य यथाह—सतेषु सनत्कुमारधिरवन्मूकवच्च रूपादिषु तथा सन्मोहादिति, तथा प्रतिपत्तिमात्र मनाग्विराधकस्य नानभिनिवेश, तथा क्रियारम्भाल्पतरविराधकस्य न प्रतिपत्तिमात्र, एव किमित्याह—एवमपि विराधनयाधीतमधीत सूत्र भाववत, कुत इत्याह—अवगमलेशयोगत सम्यगवबोधलेशयोगेन, अय सबीजो नियमेन विराधक सम्यग्दर्शनादियुक्त इत्यर्थ कुत इत्याह—मार्गगामिन एवैषा विराधना प्राप्तबीजस्येति भाव, न सामान्येनैव क्लिष्टपापबहुल स्यात् निरुपक्रमक्लिष्टकर्मवत्, निरपायो यथोदित मार्गगामीति प्रक

मः, एतदेवाह—सूत्रोक्तकारी भवति सबीजो निरपायः प्रवचनमातृसंगतः सामान्येन तद्युक्तः, विशेषेणैतदेवाह—पंचसमितः त्रिगुप्तः, ईर्यासमित्याद्याः समितयः पंच, मनोगुप्त्याद्याश्च तिस्रो गुप्तय इति सम्यग्ज्ञानपूर्वकमेवमित्याह—अनर्थपरश्चारित्रप्राणरक्षणेन एतत्त्यागः प्रवचनमातृत्यागः सम्यगेव तद्धि जानातीति योगः. कस्यानर्थपर एतत्त्याग इत्याह—अव्यक्तस्य भावबालस्य, केनोदाहरणेनेत्याह—शिशुजननीत्यागज्ञातेन, शिशोर्बालस्य जननीत्यागोदाहरणेन. स हि तत्त्यागाद्विनश्यति. व्यक्तोऽत्र क इत्याह—व्यक्तोऽत्र भावचिंतायां केवली सर्वज्ञः एतत्फलभूतः प्रवचनमातृफलभूतः सम्यग्भावपरिणत्या एतद्विजानात्यनंतरोदितं, एतदेवाह—द्विविधया परिज्ञया ज्ञपरिज्ञयापरिज्ञया च तत्वबोधमात्ररूपाः प्रत्याख्यापरिज्ञा तद्गर्भक्रियारूपा ' तहा आसासेत्यादि ' तथा आश्वासप्रकाशद्वीपं दीपं वा सम्यग्विजानातीति वर्तते, किं विशिष्टमित्याह—स्पंदनस्थिरादिभेद इह भवाब्धावाश्वासदीपः मोहांधकारे दुःखगहने प्रकाशदीपश्च, तत्राद्यः स्पंदनवानस्पंदनवांश्च प्लवनवानप्लवनवांश्चेत्यर्थः. इतरोऽपि स्थिरोऽस्थिरश्च अप्रतिपाती प्रतिपाती चेत्यर्थः. अयं च यथासंख्यं मनुष्ये क्षायोपशमिकक्षायिकचारित्ररूपः क्षायोपशमिकक्षायिकज्ञानरूपश्च, उभयत्राद्यो नाक्षेपेणेष्टसि·

द्धये सप्रत्यपायत्वात्, चरमस्तु सिद्धये निःप्रत्यपायत्वात् सम्यगेतद्विजानाति, न केवलं विजानाति अस्पदनवत् स्थिरार्थमुद्यमं करोति सूत्रनीत्या, कथमित्याह—यथाशक्ति शक्त्यनुरूपमसम्भ्रान्तो भ्रान्तिरहितः, अनुत्सुकः औत्सुक्यरहितः फलम्प्रति असपत्नयोगाराधको भवति, निःसपत्नश्रामण्यव्यापारकर्ता सूत्रानुसारित्वात्, सूत्रं च—' जोगो जिणसासणम्मि दुक्खक्खया पउंजंतो अन्नोन्नमबाहंतो असवत्तो होइ कायव्वो ' एवमुत्तरोत्तरयोगसिद्ध्यर्थं धर्मव्यापारसिद्धये इत्यर्थः किमित्याह—मुच्यते पापकर्मणा तत्तद्गुणप्रतिबन्धकेन, इत्येवं विशुध्यमानः सन् आभवम् आजन्म संसारं वा भावक्रिया निर्वाणसाधिकामाराधयति, निष्पादयत्यौचित्यारम्भनिर्वहणरूपा, तथा प्रशमसुखमनुभवति तात्विकं कथमित्याह—अपीडितः संयमतपःक्रियया आश्रवविरोधानशनादिरूपया, तथा अव्यथितः सन् परीषहोपसर्गैः क्षुदुदन्यादिभिः, कथमेतदेवमिति निदर्शनमाह—व्याधितस्य सुक्रियाज्ञातेन रोगितस्य शोभनक्रियोदाहरणेन, एतदेवाह—' से जहेत्यादि ' तद्यथा—कश्चित्सत्वो महाव्याधिगृहीतः कुष्ठादिग्रस्त इत्यर्थः, अनुभूततद्वेदनः अनुभूतव्याधिवेदनः विज्ञाता स्वरूपेण वेदनाया करुगृहीतः कण्डूयनकारिवद्विपर्यस्तो निर्विण्णस्तत्त्वतस्तद्वेदनयेति प्रक्रमः, ततः किमित्याह—सुवैद्यव

चनेन हेतुभूतेन सम्यगवैपरीत्येन तं व्याधिमवगम्य यथाविधानतो यथाविधानेन देवतापूजादिल-
क्षणेन प्रपन्नः सुक्रियां परिपाचनादिरूपां निरुद्धयदृच्छाचारः सन् प्रत्यपायभयात्तथातुच्छपथ्यभोजी
व्याध्यनुगुण्यतः, अनेन प्रकारेण मुच्यमानो व्याधितो रोगाद्यपगमेन निवर्तमानवेदनः कंड्वाद्य-
भावात् समुपलभ्यारोग्यं तदुपलंभेन प्रवर्धमानतद्भावः प्रवर्धमानारोग्यभावः तल्लाभवृत्त्या आरोग्य-
लाभनिर्वृत्त्या तत्प्रतिबंधात् आरोग्यप्रतिबंधाद्धेतोः शिराक्षयादियोगेऽपि शिरावेधक्षारपातकभावेऽपी-
त्यर्थः. व्याधिसमारोग्यविज्ञानेन व्याधेः सम्यग् यदारोग्यं तदवबोधेनेत्यर्थः, किमित्याह—इष्टापत्ते-
रारोग्यनिष्पत्तेर्हेतोरनाकुलभावतया निबंधनाभावात्, तथा क्रियोपयोगेन इति कर्तव्यताया बोधेन
हेतुना अपीडितः अव्यथितो निर्वातस्थानासनौषधपानादिना, किमित्याह—शुभलेश्यया प्रशस्तभा-
वरूपया वर्धते वृद्धिमाप्नोति, तथा वैद्यं च बहुमन्यते महापायनिवृत्तिहेतुरयं ममेति सम्यग्ज्ञानात्,
एष दृष्टांतोऽयमर्थोपनयः, एवमित्यादि, एवं कर्मव्याधिगृहीतः प्राणी, किंविशिष्ट इत्याह—अनुभूत-
जन्मादिवेदनः. आदिशब्दाज्जरामरणादिग्रहः, विज्ञाता दुःखरूपेण जन्मादिवेदनया, ननु तत्रैवा-
शक्त्या विपर्यस्त इति, ततः किमित्याह—निर्विण्णस्तत्त्वतः, ततः जन्मादिवेदनायाः, किमित्याह—

सुगुरुवचनेन हेतुना अनुष्ठानादिना तमवगम्य सुगुरु कर्मव्याधि च पूर्वोक्तविधानत, तृतीयसूत्रोक्तेन विधानेन प्रपन्न सन सुक्रिया प्रव्रज्या निरुद्धप्रमादाचारो यदङ्गया असारशुद्धभोजी सयमानुगुणेन, अनेन विधिना मुच्यमान कर्मव्याधिना निवर्तमानेष्टवियोगादिवेदनस्तथा मोहनिवृत्त्या, किमित्याह—समुपलभ्य चरणारोग्य सदुपलम्भेन प्रवर्धमानशुभभाव प्रवर्धमानचरणारोग्यभाव, बहुतरकर्मव्याधिविकारनिवृत्त्या तल्लाभनिवृत्त्या तत्प्रतिबधविशेषात् चरणारोग्यप्रतिबधविशेषात् स्वाभाविकात्कारणात्परीषहोपसर्गभावेऽपि क्षुद्दिव्यादिव्यसनभावेऽपि तत्तसवेदनात्सम्यग्ज्ञानाद्धेतो, तथा कुशलाशयवृद्धया क्षायोपशमिकभाववृद्धया स्थिराशयत्वेन चित्तस्थैर्येण हेतुना, तथा धर्मोपयोगात् इतिकर्तव्यताबोधात्कारणात सदा स्तिमित भावद्वद्वविरहित प्रशात, किमित्याह—तेजोलेश्यया शुभप्रभावरूपया वर्धते वृद्धिमनुभवति, गुरु च बहुमन्यते भाववैद्यकल्प, कथमित्याह—यथोचित मौचित्येन असगप्रतिपत्त्या स्नेहरहितस्तद्भावप्रतिपत्त्या, किमस्या उपन्यास इत्याह—निसर्गप्रवृत्तिभावेन सांसिद्धिकप्रवृत्तित्वेन हेतुना, एषाऽसगप्रतिपत्तिर्गुर्वो व्याख्याता भगवद्भि, किमित्यत आह—भावसारा तथौदयिकभावविरहेण विशेषत असगप्रतिपत्ते इहैव युक्त्यतरमाह—भगव

बहुमानेन अचिंत्यचिंतामणिकल्पतीर्थकरप्रतिबंधेन, कथमयमित्याह—यो मांप्रतिमन्यते भावतः स गुरुमित्येवं तदाज्ञा भगवदाज्ञा, इअं तत्वं व्यवस्थितं. अन्यथेत्यादि, अन्यथा गुरुबहुमानव्यतिरेकेण क्रियाप्यक्रिया प्रत्युपेक्षणादिरूपा, अक्रिया सत्क्रियातोऽन्या, किं विशिष्टेत्याह—कुलटानारीक्रियासमा दुःशीलवनितोपचाराक्रिया प्रत्युपेक्षणादिरूपातुल्या, ततः किमित्याह—गर्हिता तत्ववेदिनां विदुषां, कस्मादित्याह—अफलयोगतः, इष्टफलादन्यफलं मोक्षात्सांसारिकमित्यर्थः. तद्योगात्, एतदेव स्पष्टयन्नाह—विषान्नतृप्तिमत्र ज्ञातमल्पं विपाकदारुणं विराधनासेवनात्, एतदेवाह—आवर्त एतत्फलं, आवर्तते प्राणिनः अस्मिन्नित्यावर्तः संसारः स एव तत्वतस्तत्फलं विराधनाविपजन्यं, किंविशिष्ट आवर्त इत्याह—अशुभानुबंधः, तथातथा विराधनोत्कर्षेण, एवमफलं गुर्वबहुमानमभिधाय तद्बहुमानमाह—आयत इत्यादिना, आयतो गुरुबहुमानः साद्यपर्यवसितत्वेन दीर्घत्वादायतो मोक्षः स गुरुबहुमानं गुरुभावप्रतिबंध एव मोक्ष इत्यर्थः. कथमित्याह—अवंध्यकारणत्वेन मोक्षंप्रत्यप्रतिबद्धसम्यग्हेतुत्वेन, एतदेवाह—अतः परमगुरुसंयोगः. अतो गुरुबहुमानात्तीर्थकरसंयोगः. ततः संयोगादितस्तत्संबंधत्वात् सिद्धिरसंशयं मुक्तिरेकांतेन, यतश्चैवमतः, एषोऽत्र शुभोदयः गुरुबहुमानः,

कारणे कार्योपचारात्, अयमेव विशेष्यते—प्रकृष्टतदनुबंध प्रधानशुभोदयानुबंध तथातथाराधनो त्कर्षेण, तथा भवव्याधिचिकित्सकगुरुबहुमान एव हेतुफलभावात्, न इत सुंदर पर गुरुबहुमाना त्, रूपमात्र न विद्यते गुरुबहुमाने सुंदरत्वेन भगवद्बहुमानादित्यभिप्राय स एव प्रज्ञ स तावद् धिकृतप्रव्रजित, एष प्रज्ञ विमलविवेकात्, एवभाव विवेकाभावेऽपि प्रकृत्या एष परिणाम सामा न्येन गुर्वभावेऽपि क्षयोपशमान्माषतुषवत्, यथोक्त—विवेकशुभभावपरिणामा वचनगुरु तदभावेषु यमिनामिति एवमप्रतिपतित सन् वर्धमानस्तेजोलेश्यया नियोगत शुभप्रभावरूपया किमित्याह— द्वादशमासिकेन पर्यायेण एतावत्कालमानया प्रव्रज्ययेत्यर्थ, अतिक्रामति सर्वदेव तेजोलेश्या सा मान्येन शुभप्रभावरूपा, क एवमाहेत्यादि, एवमाह महामुनिर्भगवान्महावीर, तथा चागम —जे इमे अज्जत्ताए समणा णिग्गथा एतेण कस्स तेउलेस वीईवयति ? गोयमा ! मासपरियाए समणे णिग्गथे वाणमतराण देवाण तेउलेस वीईवयइ एव दुमासपरियाए समणे णिग्गथे असुरिंदव ज्जियाण भवणवासीण देवाण तेउलेसं वीईवयइ, तिमासपरियाए समणे णिग्गथे असुरकुमारे दाण देवाण तेउलेस वीईवयइ, चउमासपरियाए समणे णिग्गथे गहगणणक्खत्ततारारूवाण जो

इसिआणं तेउलेसं विईवयंति, पंचमासपरियाए समणे णिग्गंथे चंदिमसूरियाणं जोइसिंदाणं तेउलेसं विईवयंति. छमासपरियाए समणे णिग्गंथे सोहम्मीसाणं देवाणं तेउलेसं विईवयंति. सत्तमासपरियाए समणे णिग्गंथे सणंकुमारमाहिंदाणं देवाणं तेउलेसं विईवयंति. अठमासपरियाए समणे णिग्गंथे बंभलोगलंतगाणं देवाणं तेउलेसं, नवमासपरियाए समणे णिग्गंथे महासुक्कसहस्साराणं देवाणं तेउलेसं, दसमासपरियाए समणे णिग्गंथे आरणाच्चुयाणं देवाणं तेउलेसं, एकारसमासपरियाए समणे णिग्गंथे गेवेज्जाणं देवाणं तेउलेसं, बारसमासपरियाए अणुत्तरोववाइयाणं तेउलेसं, तेण परं सुक्के सुक्काभिजाइ भविता सिझइ जाव अंतं करेइ. एतदेवाह—ततः शुक्लशुक्लाभिजात्यो भवति, तत्र शुक्लो नामाभिन्नवृत्तोऽमत्सरी कृतज्ञः सदारंभी हितानुबंध इति शुक्लाभिजात्यश्चैतत्प्रधानः प्रायश्छिन्नकर्मानुबंधः, न तद्वेदयंस्तथाविधमन्यद्बध्नाति, प्रायोग्रहणमचिंत्यत्वात्कर्मशक्तेः कदाचिद्बध्नात्यपि, स एवंभूतः क्षपयति लोकसंज्ञां भगवद्वचनप्रतिकूलां प्रभूतसंसाराभिनंदिसत्त्वक्रियाप्रीतिरूपामिति. अत एवाह—प्रतिस्रोतोगामी लोकाचारप्रवाहानंदी. अनुश्रोतो निवृत्तिः, एनामेवाधिकृत्यैतदभ्यासत एव न्याय्यं चैतद्, यथोक्तं—अणसोयपठीए । बहुजणंमि प-

डिसोउलद्धलक्खेण ॥ पमिसोयमेव अप्पा । दायवाहो तु कामेण ॥ १ ॥ अणुसोय सुहो लोगो । पमिसोउ आसवो सुविहियाण ॥ अणुसोउ ससारो । पमिसोउ तस्सणिप्पेण ॥ २ ॥ एव सदा शुभयोग श्रामण्यव्यापारसगत एप योगी व्याख्यात, एवजूतो जगवद्भि योगी प्रतिपादित, यथोक्त—सम्यक्त्वज्ञानचारित्र—योग सद्योग उच्यते ॥ एतद्योगाद्धि योगी स्यात । परमब्रह्मसाधक ॥ १ ॥ एप एवजूत आराधक श्रामण्यस्य निष्पादक श्रमणजावस्य यथागृहीतप्रतिज्ञ आदित आरज्य सम्यक्प्रवृत्ते, एव सर्वोपधाशुद्धो निरतिचारत्वेन किमित्याह—स धत्ते घटयति शुद्धभव जन्मविशेपलक्षण भवैरेव, अयमेव विशेष्यते—सम्यग् अभवसाधक सत्क्रियाकरणेन मोक्षसाधकमित्यर्थ, निदर्शनमाह—भोगक्रियासु रूपादिकल्प न रूपादिविकलस्यैता सम्यग्भवति, यथोक्त—रूपवयो वैचक्षण्यसौजाग्यमाधुर्यैश्वर्याणि भोगसाधनमिति ततस्ता सपूर्णा प्राप्नोति, सुरूपादिकल्पाज्ञवाज्ञोगक्रिया इत्यर्थ कुत इत्याह—अविकलहेतुभावत कारणादिति, किंविशिष्टा इत्याह—असक्लिष्टसुखरूपा शून्यताजावेन सक्लेशाभावात्, तथा अपरोपतापिन्यो वैचक्षण्यादिभावेन, तथा सुदरा अनुबन्धेन, अत एव हेतो, न चान्या सपूर्णा उक्तलक्षणाभ्यो जोगक्रियाज्य,

कुत इत्याह—तत्त्वखंडनेन संक्लेशादिभ्यः, उभयलोकापेक्षया भोगक्रियास्वरूपखंडनेनेति भावः.
एतद् ज्ञानमित्युच्यते, यदेवमिष्टवस्तुतत्त्वनिरूपकं, एतस्मिन् शुभयोगसिद्धिः, एतस्मिन् ज्ञाने सति
शुभव्यापारनिष्पत्तिः लोकद्वयेऽपीष्टप्रवृत्तौ, किंविशिष्टेत्याह—उचितप्रतिपत्तिप्रधाना संज्ञानालोचने-
न तत्तदनुबंधेक्षणात्, नह्यज्ञस्तदारभते यद्विनाशयति, अत एवाह—अत्र भावः प्रवर्तकः प्रस्तुतप्रवृ-
त्तौ सदंतःकरणलक्षणो न मोह इति. अत एवाह—प्रायो विघ्नो न विद्यते अत्राधिकृतप्रवृत्तौ स-
दुपाययोगादित्यर्थः, एतद्बीजमेवाह—निरनुबंधशुभकर्मभावेन, न ह्यनीदृश इत्थं प्रवर्तते इति हृद-
यं, सानुबंधाशुभकर्मणः सम्यक्प्रव्रज्यायोगात्, आक्षिप्ता स्वीकृता एवैते योगाः शुभप्रव्रज्याव्यापाराः,
कुत इत्याह—भावाराधनातस्तथा जन्मांतरतद्बहुमानादिप्रकारेण. ततः किमित्याह—तत आक्षेपात्
सम्यक्प्रवर्तते नियमनिष्पादकत्वेन, ततः किमित्याह–निष्पादयत्यनाकुलः सन्निष्टं, एवमुक्तेन प्रका-
रेण क्रिया सुक्रिया भवति सम्यग्ज्ञानादौचित्यारब्धेत्यर्थः. इयमेव विशेष्यते–एकांतनिष्कलंका
निरतिचारतया निष्कलंककार्यसाधिका मोक्षसाधिकेत्यर्थः, यतस्तथा शुभानुबंधा अव्यवच्छेदेनोत्तरो-
त्तरयोगसिद्ध्या, ततः शुभानुबंधायाः सुक्रियायाः सकाशात् स प्रस्तुतः प्रव्रजितः साधयति निष्पाद-

यति पर प्रधान परार्थं सत्यार्थं सम्यगविपरीत, तत्कुशल परार्थसाधनकुशल सदा सर्वकाल, कथमि त्याह—तैस्तै प्रकारैर्बीजबीजन्यासादिभि सानुबधपरार्थं महोदयोऽसौ परपरार्थसाधनात् एतदेवाह —बीजबीजादिस्थापनेन बीज सम्यक्त्व बीजबीज तदाक्षेपकशासनप्रशसादि, एतन्न्यासेन, किंवि शिष्टोऽयमित्याह—कृतवीर्यादियुक्त परपरार्थप्रति अवध्यशुभचेष्ट, एनमेवप्रति समतभद्र सर्वा कारसपन्नतया सुप्रणिधानादिहेतु कचिदप्यन्यूनतया मोहतिमिरदीपस्तदपनयनस्वभावतया, रागाम यवैद्यस्तच्चिकित्सासमर्थयोगात्, द्वेषानलजलनिधि तद्विध्यापनशक्तिभावात् सवेगसिद्धिकरो भवति तद्धेतुयोगेन, अचिन्त्यचिंतामणिकल्प सत्वसुखहेतुतया सोऽधिकृत प्रव्रजित, एवमुक्तनीत्या परप रार्थसाधकधर्मदानेन, कुतो हेतोरित्याह—तथा करुणादिभावत प्रधानभव्यतया, किमित्याह—अ नेकैर्भवैर्जन्मभिर्विमुच्यमान पापकर्मणा ज्ञानावरणीयादिलक्षणेन प्रवर्धमानश्च शुभभावै सवेगा दिभि अनेकभविकयाराधनया पारमार्थिक्या प्राप्नोति सर्वोत्तम भव तीर्थकरादिजन्म, किंविशिष्ट- मित्याह—चरम पश्चिममचरमभवहेतु मोक्षहेतुमित्यर्थ, अविकलपरपरार्थनिमित्त अनुत्तरपुण्यस- भारभावेन तत्र कृत्वा निरवशेष कृत्य यदुचित महासत्वाना, विधूतरजोमल बध्यमानप्रागबद्धकर्म

रहितो व्यवहारतः सिध्यति बुध्यते मुच्यते परिनिर्वाति दुःखानामंतं करोति. अत्र सिध्यति सामान्येनाणिमाद्यैश्वर्यं प्राप्नोति, बुध्यते केवली भवति, मुच्यते भवोपग्राहिकर्मणा, परिनिर्वाति सर्वतः कर्मविगमेन, किमुक्तं भवति? सर्वदुःखानामंतं करोति, सदा पुनर्भवाऽभावात्, यद्वा सिध्यति सर्वकार्यपरिसमाप्त्या, बुध्यते तत्रापि केवलाप्रतिघातेन, मुच्यते निरवशेषकर्मणा, परिनिर्वाति समग्रसुखाप्त्या, एवं सर्वदुःखानामंतं करोतीति निगमनं, नयांतरमतव्यवच्छेदार्थमेतदेवमिति प्रव्रज्यापरिपालनसूत्रं समाप्तं, तत्वतः प्रव्रज्यापरिपालनासूत्रं समाप्तं ॥ इति पंचसूत्रकव्याख्यायां चतुर्थसूत्रव्याख्या समाप्ता ॥ श्रीरस्तु ॥

---

इदानीं पंचमसूत्रव्याख्या प्रक्रम्यते—अस्य चायमभिसंबंधः—इहानंतरसूत्रे प्रव्रजितस्य चर्योक्ता, इह तु परं तत्फलमभिधातुमाह—स एवमभिसिद्धे परमबंभे मंगलालये जन्मजरामरणरहिए इत्यादि, स प्रक्रांतः प्रव्रज्याकारी एवमुक्तेन सुखं परंपराप्रकारेण अभिसिद्धः सन्, किंभूत इत्याह—परमब्रह्म सदाशिवत्वेन, मंगलालयो गुणोत्कर्षयोगेन, जन्मजरामरणरहितो निमित्ताभावे

न, यथोक्त—दग्धे बीजे यथात्यत । प्रादुर्भवति नाकुर ॥ कर्मबीजे तथा दग्धे । न रोहति भ
वाकुर ॥ १ ॥ इति, प्रक्षीणाशुभ एकातेन अनुबधशक्तिवर्जित अशुभमगीकृत्यात एव सप्राप्तनि
जस्वरूप केवलो जीव अक्रियो गमनादिशून्य स्वभावसस्थित सासिद्धिकधर्मवान्, अत एवाह—
अनतज्ञानोऽनतदर्शन ज्ञेयानतत्वात्, स्वभावश्चायमेव, यथोक्त—स्थित शीतांशुवज्जीव । प्रकृत्या
भावशुद्धया ॥ चद्रिकावच्च विज्ञान । तदावरणमभ्रवत् ॥ १ ॥ अथ कीदृशोऽसौ वर्णरूपाद्यामित्या
शकापोहायाह—' से ण सद्देत्यादि ' स सिद्धो न शब्दो न रूप न गधो न रसो न स्पर्श पुद्ग
लधर्मत्वादमीषा, अभावस्तर्हीत्येतदपि नेत्याह—अरूपिणी सत्ता ज्ञानवत्, अनित्थस्थसस्थाना, इ
द प्रकारमापन्नमित्थ, इत्थस्थितमित्थस्थ, न इत्थस्थ अनित्थस्थ सस्थान यस्या अरूपिण्या सत्ताया
सा यथोक्ता अनतवीर्या, इय सत्ता प्रकृत्यैव, तथा कृतकृत्या तन्निष्पादनेन निवृत्तनछक्ति सर्वबाधा
विवर्जिता द्रव्यतो भावतश्च सर्वथा निरपेक्षा तत्त्वस्यपगमेन, अत एव स्तिमिता प्रशांता सुखप्रक
र्षादनाकुला निस्तरगमहोदधिकल्पा, एतस्या एव परमसुखत्वमभिधातुमाह—असांयोगिक एप आ
नद सुखविशेप, अत एव निरपेक्षत्वात्, परो मत प्रधान इष्ट, इहैव व्यतिरेकमाह—अपेक्षा

नानंद औत्सुक्यदुःखत्वात अपेक्ष्यमाणाप्त्या तन्निवृत्तौ दोषमाह—संयोगवियोगकारणं तदवसान-
तया स्वभावत्वात्, अफलफलमेतस्मात्संयोगात्, किमित्यत आह—विनिपातपरमेव तत्संयोगिक
फलं, कथमिदं बहुमतमित्याह—बहुमतं मोहादबुधानां पृथग्जनानां, तत्रापि निबंधनमाह—यदतो
विपर्ययः मोहादत एवाफले फलबुद्धिः, ततो विपर्ययादनर्थाः असत्प्रवृत्त्या अपर्यवसिताः सानुबंधत-
या, एवमेष भावरिपुः परमोहः अत एवोक्तो भगवता तीर्थंकरेण, यथोक्तं—अणाणतो रिपु अ-
सो । पाणिणं णेव विज्जइ ॥ एसो सक्किरियातीए । अणाबाविस्सतो मुहा ॥ १ ॥ यदि संयोगो
दुष्टः कथं सिद्धस्याकाशेन न स दुष्ट इत्याशंक्याह—नाकाशेन सह योग एतस्य सिद्धस्य, कि-
मित्यत आह-स स्वरूपसंस्थितः सिद्धः, कथमाधारमंतरेण स्थितिरित्याशंक्याह—नाकाशमन्यत्राधा-
रे, अत्रैवं युक्तिर्न सत्ता सदंतरमुपैति, न चान्यथान्यदन्यत्र अचिंत्यमेतत्प्रस्तुतं केवलिगम्यं तत्वं,
तथा निश्चयमतमेतद्व्यवहारमतं त्वन्यथा सत्यपि तस्मिन्निदं तत्संयोगशक्तिक्षयात्सूपपन्नमेव, अभ्युच्च-
यमाह—वियोगवांश्च योग इति कृत्वा नैष योगः सिद्धाकाशयोरिति भिन्नं लक्षणमेतस्याधिकृतयो-
गस्य, न चात्रापेक्षा सिद्धस्य, कथं लोकांताकाशगमनमित्याह—स्वभाव एवैष तस्य. अनंतसुख-

स्वभावकटप कर्मक्षयव्यग, कीदृशमस्यानत सुखमित्याह—उपमात न विद्यते सिद्धसुखे, यथो
क्त—स्वय वेद्य हि तद्ब्रह्म—कुमारीस्त्रीसुख यथा ॥ अयोगी न विजानाति । सम्यग् जात्यधवञ्च
त ॥ १ ॥ अत एवाह—तद्भावे सिद्धसुखभावे अनुभवो नवर तस्यैव, एतदपि कथ ज्ञायत इत्या
ह—आज्ञा एषा जिनाना वचनमित्यर्थ किंविशिष्टानामित्याह—सर्वज्ञाना, अत एव अवितथै-
कांतत सत्येत्यर्थ, कुत इत्याह—न वितथत्वे निमित्त, रागाद्यभावात् उक्त च—रागाद्वा द्वेषाद्वा
। मोहाद्वा वाक्यमुच्यते ह्यनृत ॥ यस्य तु नैते दोषा—स्तस्यानृतकारण नास्ति ॥ १ ॥ न चानि
मित्त कार्यमित्यपि, तथा जिनाज्ञा, एव स्वसवेद्य सिद्धसुखमित्याप्तवाद, निदर्शनमात्र तु नवग सि-
द्धसुखस्येद वक्ष्यमाणलक्षण ' सवसत्तुक्खयेत्यादि ' सर्वशत्रुक्षय इति, तथा सर्वव्याधिविगमे, एव
सर्वार्थसयोगेन सता तथा सर्वेच्छासप्राप्त्या यादृशमेतत्सुख भवति, अतोऽनतगुणमेन सिद्धसुख, कु
त इत्याह—भावशत्रुक्षयादित, आदिशब्दाद्भावव्याधिगमादयो गृह्यते, तथा चाह—रागादयो भा
वशत्रव, रागद्वेषमोहा जीवापकारित्वात, कर्मोदया व्याधय तथा जीवपीडनात्, परमलब्धयस्त्वर्था
परार्थहेतुत्वेन, अतीतेच्छा सर्वथा तन्निवृत्त्या, एव सूक्ष्ममेतत्सुख न तत्वत परमार्थेन इतरेण गम्यते

असिद्धेन, निदर्शनमाह—यतिसुखमिवायतिना, विशिष्टक्षायोपशमिकभाववेद्यत्वादस्य, एवमारो-
ग्यसुखमिव रोगिणेति, उक्तं च—रागाईणमभावे । जं होइ सुहं तयं जिणो मुणइ ॥ ण हि
सण्णिवायगहिओ । जाणइ तदभावजं सोक्खं ॥ १ ॥ इति विभाषा कर्तव्या. सर्वथा चिंत्यमेतत्स्वरू-
पेण सिद्धसुखं, न तत्वतो मतेरविषयत्वात्, साद्यपर्यवसितं प्रमाणतः एकसिद्धापेक्षया, न तु तत्प्र-
वाहमधिकृत्य, प्रवाहतस्त्वनादि, तदेवमाश्रित्य तथा चाह—तेऽपि भगवंतः सिद्धा एवं एकसिद्धापे-
क्षया साद्यपर्यवसिताः, प्रवाहापेक्षया अनाद्यपर्यवसिता इति. समाने भव्यत्वादौ कथमेतदेवमित्या-
ह—तथाभव्यत्वादिभावात्, तथाफलपरिपाकीह तथाभव्यत्वं, अत एवाह—विचित्रमेतत्तथाभव्य-
त्वादि कुत इत्याह—तथाफलभेदेन कालादिभेदभाविफलभेदेनेत्यर्थः, समाने भव्यत्वे सहकारि-
भेदात्फलभेदा इत्याशंकापोहायाह—नाविचित्रे तथाभव्यत्वादौ सहकारिभेदः, किमित्यत आह—
तदपेक्षस्तत्क इति तदेतत्स्वभावत्वे तदुपनिपाताभावादिति, अनेकांतवादस्तत्ववादः सर्वकारणसा-
मर्थ्यापादनात्, स स खल्वनेकांतवाद एवं तथाभव्यत्वादिभावे इतरथैकांतः सर्वथा भव्यत्वादेस्तु-
व्यश्चायं, ततः किमित्याह—मिथ्यात्वमेष एकांतं, कुत इत्याह—नातो व्यवस्था एकांतात्, भव्य-

त्वाभेदे सहकारिभेदस्यायोगात्, तत्कर्मताभावात् कर्मणोऽपि कारकत्वात्, एतत्स्वभावस्य च कार कत्वासम्भवादिति भावनीयमत एवाह—अनार्हतमेतदेनाताश्रवण प्रस्तुतप्रसाधकमेव, न्यायातरमाह—ससारिण एव सिद्धत्व, नान्यस्य, कोऽय नियम इत्याह—नाबद्धस्य मुक्तिस्तात्त्विकी इत्याह—शब्दार्थरहिता बधाभावेन, अयं चानादिमान् बध प्रवाहेण सतत्या, कथ युक्तिसगतोऽभूतिभावेनेत्याह—अतीतकालतुल्य स हि प्रवाहेणानादिमाननुभूतवर्तमानाभावाश्च, यथोक्त—भवति स नामातीत—प्राप्तो यो नाम वर्तमानत्व ॥ एष्यश्च नाम म भवति । य प्राप्स्यति वर्तमानत्व ॥ १ ॥ किं चानद्ध बधने प्रथम अमुक्तिर्मुक्त्यभाव, कुत इत्याह—पुनर्बधप्रसगात्, अबद्धत्वेन हेतुना, तथा चाह—अविशेषो बद्धमुक्तयोरिति अनादिमति बधे मोक्षाभाव तत्स्वाभाविकत्वेनेवेत्याशकानिरासायाह—अनादियोगेऽपि सति वियोगोऽविरुद्ध एव, कांचनोपलज्ञातेन, लोके तथा दर्शनात्, योगो बध इत्यनर्थांतर आदावबद्धस्य दिदृक्षा, बद्धमुक्तस्य तु न सेति दोषाभावादादिमानेव बधोऽस्त्वित्याशकाव्यपोहायाह—न दिदृक्षाऽकरणस्येंद्रियरहितस्याबद्धस्य चितिना, तथा न चाहष्टे एषा दिदृक्षा द्रष्टुमिच्छा दिदृक्षेति कृत्वा सहजैकैषेत्याशकानिराकरणायाह—तेन सहजाया निवृत्तिदिदृक्षायाश्चैतन्य

वत्, अस्तु वेयमित्यभ्युपेत्य दोषमाह–न निवृत्तौ दिदृक्षाया आत्मनः स्थानं तदव्यतिरेकात्, तथा चाह–नोऽन्यथा तस्यैषा आत्मनो दिदृक्षायोगात्, तदव्यतिरेकेऽपि भव्यत्वस्येव तन्निवृत्तौ दोषाभाव इत्याशंकापोहायाह–न भव्यत्वतुल्या न्यायेन दिदृक्षा, कुत इत्याह—न केवलजीवरूपसेतद्भव्यत्वं, दिदृक्षा तु केवलजीवरूपेत्यर्थः, नो भावियोगापेक्षया महदादिभावे तदा केवलत्वेन तुल्यत्वं दिदृक्षाया भव्यत्वेन, अत्र युक्तिमाह–तदा केवलत्वेन भावियोगाभावे सदा अविशेषात्तथा सांसिद्धिकत्वेन तदूर्ध्वमपि दिदृक्षापत्तिरिति हृदयं, एवं स्वभावेनैवेयं दिदृक्षा या महदादिभावाद्विकारदर्शने केवलावस्थायां निवर्तेत इत्येतदाशंक्याह–तथा स्वभावकल्पनं कैवल्याविशेषे प्रकृत्या दिदृक्षाया भावाभावस्वभावकल्पनमप्रमाणमेव, आत्मनस्तद्भेदापत्तेः प्रकृतिपुरुषाधिकत्वेन तदभावापत्तेरिति गर्भः, अत एवाह–एष एव दोषः प्रमाणाभावलक्षणः परिकल्पितायां दिदृक्षायां अभ्युपगम्यमानायां तथाहि परिकल्पिता न किंचित्कथं तत्र प्रमाणवृत्तिरिति. तदेवं व्यवस्थिते सति परिणामभेदादात्मन इति प्रक्रमः, बंधादिभेदो बंधमोक्षभावेन, एवं द्रव्यास्तिकमतमधिकृत्य कृता निरूपणा, पर्यायास्तिकमतमधिकृत्याह–नात्मभूतं कर्म न बोधस्वलक्षणमेवेत्यर्थः, तथा न परिकल्पि-

तममदे वैतत्कर्मवामनादिरूप कुत इत्याह—नैव भवादिभेद आत्मभूते परिकल्पिते वा कर्मणि बोधमात्राविशेषेण क्षणभेदेऽपि मुक्तक्षणभेदवन्न भवापवर्गविशेष तथा न भावाभाव एव मिद्धि सतानोच्छेदरूपा प्रध्यातप्रदीपोपमा, अत्रोक्तिमाह—न तदुच्छेदेऽनुत्पाद न सतानोच्छेदेऽनुत्पादस्त स्यैव किं तर्ह्युत्पाद एव, यथासौ सन्नुच्छिद्यते एवमसन्नप्युत्पद्यतामिति को विरोध ? यन्नैन नत किमित्याह—नैव समजसत्व न्यायोपपन्न, कथमित्याह—एव हि नानादिमानप ससार कदाचिदेव सतानोत्पत्ते, तथा न हेतुफलभाव, चरमाद्यक्षणयोरकारणकार्यत्वात् पक्षातरनिरासायाह—तस्य तथास्वभावकल्पनमयुक्त, कुत इत्याह—निराधारोऽन्वयकृतो नियोगेन, अयमत्र भावार्थ —स्व भाव इत्यात्मीया सत्ता स्वभाव, एव च स निवृत्तिस्वभाव इति स्वाभाविकी आत्मीया सत्तेति निराधारत्व, यद्वान्वयाभावस्तन्निवृत्तिसूत्रादिति नियोगग्रहणमवश्यमिदमिल्लमन्यथा शब्दार्थायोगादिति ख्यापनार्थं एवमाद्यक्षणोऽपि भावनीयमत एवाह—तस्यैव तथाभावे युक्तमेतत्तथास्वभावकल्पनमिति, सूक्ष्मार्थपदमेतद्भावगम्यत्वात् विचितव्य महाप्रज्ञया, अन्यथा ज्ञातुमशक्यत्वादिति, आनुषगिकमभिधाय प्रकृतमाह—अपर्यवसितमेवमुक्तेन विधिना सिद्धिसौख्य, अत एव कारणात् उत्तममि

दं, एतदेव स्पष्टमभिधातुमाह—सर्वथा अनुत्सुकत्वे सति अनंतज्ञानात् कारणात् क निवास एषा-
मित्याह—लोकांतसिद्धिवासिन एते चतुर्दशरज्ज्वात्मके लोकांते या सिद्धिः प्रशस्तक्षेत्ररूपा तद्वा-
सिन एते सिद्धाः कथं व्यवस्थिता इत्याह—यत्रैकः सिद्धस्तत्र क्षेत्रे नियमान्नियोगेनानंताः सिद्धाः,
उक्तं च—जह य एगो सिद्धो । तह अणंता भवक्खयविमुक्का ॥ अणोणमबाबाहं । चिट्ठंति सुही
सुहं पत्ता ॥ १ ॥ कथमिह कर्मक्षये लोकांतगमनमित्याह—अकर्मणः सिद्धस्य गतिरितो लोकांतं
पूर्वप्रयोगेण हेतुना तत्स्वाभाव्यात्, कथमेतदेवं प्रतिपत्तव्यमित्याह—अलाबुप्रभृतिज्ञाततः, मृल्लेप-
विसजलक्षिप्ताधोनिमग्नतदपगमोर्ध्वगमनस्वभावालाबुवत्, प्रभृतिग्रहणादेरंडफलादिग्रहः, ऊर्ध्वग-
मनं तत्रैव वासकृत्कृमनागमनं किं नेत्येतदाशंक्याह—नियमोऽत एवालाबुप्रभृति ज्ञातः, एकसम-
यादि उत्पलपत्रशतव्यतिभेददृष्टांतेन एकसमयेन तद्गतिर्युक्तेत्याशंकापोहायाह—अस्पृशद्गत्या ग-
मनं सिद्धस्य सिद्धिक्षेत्रंप्रति स्पृशद्गतिमदपेक्षया वोत्पलपत्रशतव्यतिभेददृष्टांतः, कथमियं संभवती-
त्याह—उत्कर्षविशेषत इयं गत्युत्कर्षविशेषदर्शनादेवमस्पृशद्गति संभवतीति भावनीयं, सिद्धस्यापु-
नरागमनात्कालस्य चानादित्वात् प्रायोऽनेकसिद्धैर्भव्योच्छेदप्रसंग इति विभ्रमनिरासार्थमाह—अन्य-

पच वच्छेदो भन्यानामनतत्वावेन तथा मिद्धिगमनादावपि, वनस्पत्यादिषु कायस्थितिदायदर्शनादनतस्या
पि राशे दायोपपत्ते पुन सशय इति तद्व्यवच्छित्त्यर्थमाह—एतदनानतक एतदभव्यानतकमन
गैरा तानतक न युक्तमनन्तकादिसमयात् अत्र ज्ञान, तेषा प्रतिक्षणमतिक्रमेऽनुच्छेदोऽनतत्वात्, कथ त
११ ह्यतदुच्यते—ऋतुर्व्यतीत परिवर्तते पुन । दाय प्रयात पुनरेति चद्रमा ॥ गत गत नैव तु म
न्निवर्तते । जल नदीना च नृणा च जीवित ॥ १ ॥ इति उच्यत एतद्व्यवहारतस्तूच्यते, अन्यथा
तस्यैव परावृत्तौ बालाद्यनिवृत्ति, तस्य तद्बालाद्यापादनस्वभावत्वादिति परिभावनीय, अतो न दायो
भव्यानामिति स्थित, एव च सति भव्यत्व योग्यतामात्रमेव सिद्धिप्रति केषाचित्प्राणिना ये न क
दाचिदपि सेत्स्यते, तथा चागम —भवावि न सिज्झिसति के इत्यादि, भव्यत्व सिद्धिगमनयोग्य
त्व, फलगम्या च योग्यता, को वा एवमनयोरन्योन्यो विशेषो भव्यानामित्याशकापोहायाह—प्रतिमा
योग्यदारुनिदर्शनेन, तथाहि तुल्याया प्रतिनिष्पत्तौ, तथाप्येक दारु प्रतिमायोग्य ग्रन्थ्यादिशून्यतया,
न तदन्यत्तद्व्यक्ततयोत्पादादिद नासिद्धमेतत्, न चात्रापि तत्र स्वभावत्वादिविकल्पचिता कार्या, कु
त इत्याह—व्यवहारमतमेतत् अय चैव व्यवस्थित इति भावितमेव, न चाय मवृत्तिरूप इत्याह—

एषोऽपि तत्वांगमेषोऽपि व्यवहारनयः परमार्थांगं इह प्रक्रमे यथायोग्यता बुद्धेरपि सन्निबंधनत्वात, तत्स्वभावाविशेषे तु दार्वंतरवदयोग्यदारुण्यपि तथा बुद्ध्यसिद्धेरित्यादि निर्लोठितमन्यत्र. इत्यनुष्ठानमेवाधिकृत्याह—एषोऽपि तत्वांगं, यथोक्तं—जइ जिणमयं पवज्जह। तामा ववहारनियच्छये मुयह॥ ववहारणवुच्छेए। तिच्छेयो जतो वस्सं॥ १॥ अत एषोऽपि व्यवहारनयस्तत्वांगं प्रवृत्तौ मोक्षांगमित्यर्थः. कुत इत्याह—प्रवृत्तिविशोधनेन तन्मतेन प्रव्रज्यादिप्रदानात्परलोकप्रवृत्तिविशोधनेन, इत्थमनेकांतसिद्धितः सन्नीत्या तथानिश्चयांगभावेन, एवं प्रवृत्त्याऽपूर्वकरणादि..सिः परिशुद्धस्तु केवलमाज्ञापेक्षी पुष्टालंबनः, एषा आज्ञेह भगवत उन्नयनयगर्भा अथवा सा चैव पंचसूत्रोक्ता. किं विशिष्टेत्याह—समंतभद्रा सर्वतो निर्दोषा, कथमित्याह—त्रिकोटिपरिशुद्ध्या कषच्छेदतापपरिशुद्ध्या इयं च भागवती सदाज्ञा सर्वैव अपुनर्बंधकादिगम्या अपुनर्बंधकादयो ये सत्वाः उत्कृष्टां कर्मस्थितिं तथा अपुनर्बंधकत्वेन ये क्षपयंति ते खल्वपुनर्बंधकाः. आदिशब्दान्मार्गाभिमुखमार्गपतितादयः परिगृह्यंते दृढप्रतिज्ञालोचकादिलिंगाः. एतद्गम्येयं न संसाराभिनंदिगम्या. तेषां ह्यतो विषयप्रतिभासमात्रं ज्ञानमुदेति न तद्वेषत्वादिवेदकमिति, उक्तं च—न यथावस्थितं शास्त्रं। खरुंको वे-

त्ति जातुचित् ॥ ध्यामत्वादपि चित्रातु । निर्मल स्यात् स्वहेतुन ॥ १ ॥ अपुनर्बंधकत्वादिलिगमा
ह—एतत्प्रियत्व खल्वेतल्लिग आज्ञाप्रियत्वमपुनर्बंधकादिलिग, प्रियत्वमुपलक्षण श्रवणाभ्यासादे,
एतदप्यौचित्यप्रवृत्तिविज्ञेय तदाराधनेन तद्बहुमानात्, औचित्यबाधया तु प्रवृत्तौ न तत्प्रियत्वं मोह
एवामाविति, एतत्प्रियत्वमेव विशेष्यते—सवेगसाधक नियमात् यस्य भागवती सदाज्ञा प्रिया त
स्य नियमत सवेग इति, यत एवमतो नैषा अन्येभ्यो देया, तेषा भागवती सदाज्ञा अन्येभ्योऽ
पुनर्बंधकादिव्यतिरिक्तेभ्य ससाराभिनदिभ्यो ज्ञेया, कथ ते ज्ञायत इत्याह—लिगविपर्ययात्तत्प
रिज्ञाप्रक्रमादपुनर्बंधकादि लिगविपर्ययात् सज्ञा तद्द्वेषादिलक्षणा तत्परिज्ञा ससाराभिनदिपरिज्ञा, उ
क्त च—क्षुद्रो लोभोरतिदीनो । मत्सरी भयवान् शठ ॥ अज्ञो भवाभिनदी स्या-न्निष्फलारंभस
गत ॥ १ ॥ किमिति न तेभ्यो देयेत्याह—तदनुग्रहार्थं ससाराभिसत्वानुग्रहार्थ, उक्त च—अ
प्रशातमतौत्साह-सद्भावप्रतिपादन ॥ दोषायाभिनवोदीर्णे । शमनीयमिव ज्वरे ॥ १ ॥ इहैव निद-
र्शनमाह—आमकुभोदकन्यासज्ञातेन, उक्त च—आमे घडे निहिय । जहा जल त घड विणा
सेइ ॥ इय सिद्धतरहस्स । अप्पाहार विणासेइ ॥ १ ॥ एषा करुणोच्यते, अयोगेभ्य सज्ञाऽप्र

दानरूपा, किं विशिष्टेत्याह—एकांतपरिशुद्धा तदपायपरिहारेण, अत एवेयमविराधनाफला सम्यगालोचनेन, न पुनर्ग्लानापथ्यप्रदानेन निबंधनकरुणावत्तदाभासेति, इयं चैवंभूता त्रिलोकनायकबहुमानेन हेतुना निःश्रेयससाधिकेति. किमुक्तं भवति ? नानागमिकस्येयं भवति, किंतु परिणतागमिकस्य, अस्य च भगवत्येवं बहुमानः, एवं चेयं मोक्षसाधिकेव सानुबंधसुप्रवृत्तिभावेन, प्रव्रज्याफलसूत्रं समाप्तं, एवं पंचमसूत्रव्याख्या समाप्ता. समाप्तं पंचकसूत्रकं व्याख्यानतोऽपि, नमः श्रुतदेवतायै भगवत्यै, सर्वनमस्कारार्हेभ्यो नमः, सर्ववंदनार्हान् वंदे सर्वोपकारिणामिच्छामो वैयावृत्यं सर्वानुभावादौचित्येन मे धर्मे प्रवृत्तिर्भवतु, सर्वे सत्वाः सुखिनः संतु. ॥ इति श्रीपंचसूत्रटीका समाप्ता ॥ ॥ श्रीरस्तु ॥ कृतिरियं श्वेतांबराचार्यहरिभद्रस्य धर्मतो याकिनीमहत्तरासूनोः ॥ आ ग्रंथ श्रीजामनगरनिवासी पंडित श्रावक हीरालाल हंसराजे स्वपरना श्रेयमाटे पोताना श्रीजैनभास्करोदय छापखानामां छापी प्रसिद्ध कर्यो छे.

॥ समाप्तोऽयं ग्रंथो गुरुश्रीमच्चारित्रविजयसुप्रसादात् ॥

